

॥ श्रीः ॥

# सांख्यतत्त्वकौमुदी ।


महामहोपाध्याय श्रीवाचस्पतिमिश्र
विरचिता श्रीभारतीनामकयतिकृ
तव्याख्यया समलङ्कृता बाबू
कौलेश्वरसिंहानुज्ञया ।



काश्यां ।
जैनप्रभाकरनाम्नि यन्त्रालये
मुद्रिता ।

प्रभुणोपाह्व काशीनाथशास्त्रिणा
परिशोधिता ।

बाबूकौलेश्वरसिंह बुक्सेलर बनारस ।

सम्बत् १९४५ आश्विन सुदि १[illegible] रवौ ।



श्रीगणेशाय नमः ॥

# ॥ साङ्ख्यतत्त्वकौमुदी ॥

॥ सटीका ॥



अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां नमामः । अजा ये तां जुषमाणां भजन्ते जहत्येनां भुक्तभोगां नुमस्तान् ॥ १ ॥

येषां यत्प्रसादादज्ञं नित्यमात्मानमशरीरिणम् ।
विजाने तान्गुरून्भक्त्या नमामि करुणाकरान् ॥ १ ॥

सांख्यसप्ततिं व्याचिख्यासुराचार्यो वाचस्पतिमिश्रः प्रारिप्सितग्रन्थस्य निष्प्रत्यूहपरिसमाप्तिप्रचयगमनाभ्यां शिष्टाचारपरिपालनाय प्रधानस्य पुंभोगापवर्गार्थं प्रवृत्तिलक्षणसांख्यशास्त्रतात्पर्यं कथयन् प्रकृतिं पुरुषांश्च नमस्यति । अजामेकामिति । नजायतइत्यजा मूलप्रकृतिः तां नमाम इत्यन्वयः । ननु तस्याः सद्भावे प्रमाणाऽभावान्निर्विषयत्त्वं नमस्कारस्येत्यत आह ॥ बह्वीः प्रजाः सृजमानामिति॥ विमताः प्रजाः सुखदुःखमोहात्मककारणपूर्विकास्तदन्वितत्वात्, यदित्थं तत्तथा यथा मृदन्वितं घटादि मृत्कारणपूर्वकं, तथा चैताः प्रजास्तस्मात्तथेति प्रकृतिसिद्धेर्न निर्विषयत्वं नम-

स्कारस्येतिभावः । ननु कार्यानेकत्वात्कारणानेकत्वमित्याशंक्याह । एकामिति । नन्वेकस्याः प्रकृतेः साधनसामग्रीव्यतिरेकेण विचित्रजगन्निर्माणकर्तृत्वं न संभवतीत्याशंक्याह ॥ लोहितेति । लोहितकृष्णशुक्लशब्दै रजस्तमःसत्वानि गुणवृत्त्याऽभिधीयन्ते रञ्जनात्मकत्वाल्लोहितं रज आवरणात्मकत्वात्कृष्णं तमः प्रकाशात्मकत्वात् शुक्लं सत्वं, तेषां गुणानां साम्यावस्था अवयवधर्मैर्व्यपदिश्यते । लोहितकृष्णशुक्लेति । एकस्या अपि गुणवैचित्र्याद्विचित्रकार्यकर्तृत्वमित्यर्थः । प्रधानं नमस्कृत्य यद्भोगापवर्गाय तत् प्रवर्तते तान् पुरुषान्नमस्करोति । अजा इति । जुषमाणामिति । सेवमानां प्रीयमाणां च भोगं साधयन्तीमितियावत् । भजन्ते इति, सेवन्ते तामेवाधिष्ठायात्मत्वेनोपगम्य वयं सुखिनो दुःखिनो मूढा इत्यविवेकतया संसरन्तीत्यर्थः । ननु प्रकृतिभोगं साधयन्तीं चेत्पुरुषाः सेवन्ते, तर्हि तेषां विषयिणां विचित्रानन्तभोगभोगिनां वैराग्याभावादनिर्मोक्ष इति चेत्तत्राह । जहत्येनामिति । तएवोत्पन्नविवेकज्ञानाः सन्तो भुक्तभोगां कृतभोगां परित्यजन्ति १

कपिलाय महामुनये मुनये शिष्याय तस्य चासुरये । पञ्चशिखाय तथेश्वरकृष्णायैते नमस्यामः ॥ २ ॥

प्रकृतिं पुरुषांश्च नत्वा ऽधुनाविद्यामासाद्यान्तरङ्गसाधनत्वज्ञापनाय तत्वसंप्रदायप्रवर्तकानाचार्यान् प्रणम-

ति । कपिलायेत्यादिना । अहं भो अभिवादये इति शास्त्रोक्तन्यायात् एतइति स्वज्ञापनं एते इत्यत्र वयमिति शेषः, नमस्याम इत्युत्तमपुरुषप्रयोगात् आसुरेः शिष्यः पञ्चशिखस्तच्छिष्य ईश्वरकृष्ण इति ॥ २ ॥

इह खलु प्रतिपित्सितमर्थं प्रतिपादयन् प्रतिपादयिताऽवधेयवचनो भवति प्रेक्षावताम् । अप्रतिपित्सितमर्थन्तु प्रतिपादयन्नायं लौकिको नापि परीक्षक इति प्रेक्षावद्भिरुन्मत्तवदुपेक्षणीयः । स चैषां प्रतिपित्सितोऽर्थो यो ज्ञातः सन् परमपुरुषार्थाय कल्पते इति प्रारिप्सितशास्त्रविषयज्ञानस्य परमपुरुषार्थसाधनहेतुत्वात्तद्विषयां जिज्ञासामवतारयति ।

यस्य ग्रन्थस्य व्याचिख्यासामुद्दिश्य विघ्नोपशमादिसमर्थं शिष्टाचारप्रमाणकं देवतागुरुनमस्कारलक्षणं मङ्गलमाचरितं, विनाविषयसम्बन्धौ तथैवार्थाधिकारिणौ। अव्याख्येयो भवेद्ग्रन्थः स्याद्ग्रन्थे तच्चतुष्टयमिति, स्मरणाद्विषयसम्बन्धप्रयोजनाधिकार्यभावनिमित्तां तस्य ग्रन्थस्यानारम्भाशङ्कां व्यावर्तयति। इह खल्वित्यादिना। इह शास्त्रे खलु निश्चयेन जिज्ञासितमर्थं ज्ञापय-

न्नुपदेष्टा आदर्त्तव्यवचनो बुद्धिमतां भवतीत्यभाविः । विपक्षे दण्डमाह । अप्रतिपित्सितं त्विति । ननु पञ्चविंशतितत्त्वविदो व्यवहारातीतत्वादलौकिकत्वं मण्डनमेवेति चेत्तत्राह । नापि परीक्षकइति । ननु तर्हि जिज्ञासुर्जिज्ञासितार्थज्ञानं कुत उपदेष्टुर्येन जिज्ञासितमेवोपदेक्ष्यति नान्यदिति चेत्तत्राह ॥ सचैषामिति । बुद्धिमतामित्यर्थः । प्रारब्धुमिष्टं यच्छास्त्रं तस्य विषयो व्यक्ताव्यक्तज्ञलक्षणास्तज्ज्ञानस्य परमपुरुषार्थसाधनत्वं यत्तदेव हेतुर्यस्याःसा तां प्रारिप्सितशास्त्रविषयज्ञानस्य कैवल्यसाधनत्वमूलां शास्त्रविषयसम्बन्धिनीमनुभवफलपर्यन्तां ज्ञातुमिच्छामित्यर्थः ।

दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ । दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात् ॥ १ ॥

एवं हि शास्त्रविषयो न जिज्ञास्येत यदि दुःखं नाम जगति न स्यात् सद्वा अजिहासितं जिहासितं वा अशक्यसमुच्छेदम्, अशक्यसमुच्छेदता च द्वेधा दुःखस्य नित्यत्वात् तदुच्छेदोपायापरिज्ञानाद्वा, शक्यसमुच्छेदत्वेऽपि च शास्त्रविषयस्य ज्ञानस्यानुपायभूतत्वा

द्वा सुकरस्योपायान्तरस्य सद्भावाद्वा । तत्र न तावद्दुःखं नास्ति नाप्यजिहासितमित्युक्तं दुःखत्रयाभिघातादिति । दुःखानां त्रयं दुःखत्रयं तत् खलु आध्यात्मिकं चाधिभौतिकं चाधिदैविकञ्च । तत्राध्यात्मिकं द्विविधं, शारीरं मानसञ्च । शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तं मानसं कामक्रोधलोभमोहभयेर्ष्याविषादविषयविशेषादर्शननिबन्धनम् । सर्वञ्चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम् । बाह्योपायसाध्यं दुःखं द्वेधा, आधिभौतिकमाधिदैविकञ्च, तत्राधिभौतिकं मानुषपशुमृगपक्षिसरीसृपस्थावरनिमित्तम्, आधिदैविकं यक्षराक्षसविनायकग्रहाद्यावेशनिबन्धनम्, तदेतत् प्रत्यात्मानि वेदनीयं दुःखं रजःपरिणामभेदो न शक्यते प्रत्याख्यातुम् । तदनेन दुःखत्रयेणान्तःकरणवर्त्तिना चेतनाशक्तेः प्रतिकूलत्व

दनीयतया ऽभिसम्बन्धोऽभिघात इति ।

ननु शास्त्रविषयविज्ञानेनार्थसिद्धेरभावात्किं तज्जिज्ञासयेत्याशङ्क्य व्यतिरेकमूलेन तृतीयविकल्पावान्तरविभागसहितविकल्पपञ्चकद्वाराविषयस्य प्रयोजनवत्त्वेन जिज्ञासां समर्थयते । एवं हीत्यादिना । दुःखत्रयं व्याख्यायेदानीमभिघातं व्याकरोति । तदनेनेति । प्रतिकूलतयाऽनिष्टतयेत्यर्थः ।

एतावता प्रतिकूलवेदनीयत्वं जिज्ञासाहेतुरुक्तः । यद्यपि न सन्निरुध्यते दुःखं, तथापि तदभिभवः शक्यः कर्त्तुमित्युपरिष्टादुपपादयिष्यते । तस्मादुपपन्नं तदपघातके हेताविति, तस्य दुःखत्रयस्यापघातकस्तदपघातकः उपसर्जनस्यापि बुद्ध्या संनिकृष्टस्य तदा परामर्शः । उपघातकश्च हेतुः शास्त्रप्रतिपाद्यो नान्य इत्याशयः ।

दुःखस्य नित्यरजःस्वरूपत्वेन नित्यत्वाद्विनाशः कर्तुं न शक्यतइति चेत्तत्राह । यद्यपि नेति, सन्नित्यं दुःखत्रयं यद्यपि न विनाश्यते तथाप्युपायेन तदीयाभिभवः कर्तुं शक्यतइति ज्ञानेन चाऽपवर्ग इत्यत्र कथयिष्यतइति । द्वेधाप्यशक्यसमुच्छेदता नास्तीत्युक्ता फलितमर्थमाह ।

तथा चेति । ननूपसर्जनं पूर्वमिति पाणिनिस्मरणात् दुःखत्रयाभिघातादित्यत्राभिघातपदस्याप्राधान्यं दुःखत्रयपदस्योपसर्जनीभावस्तत्र तच्छब्देनाभिघाते गृहीतव्ये तच्छब्देन दुःखत्रयग्रहणं कथमित्याशंक्य दुःखत्रयग्रहणे तदभिघातग्रहणं पारमार्थिकमित्यभिप्रेत्याह । उपसर्जनस्यापीति । गुणभूतस्य तदेति तच्छब्देन शास्त्रविषयस्यानुपायत्वलक्षणो विषयजिज्ञासानवतारे हेतुश्चतुर्थोऽपि विकल्पो नास्तीत्याह । अपघातकेति ।

अत्रशङ्कते । दृष्टे सापार्था चेदिति । अयमर्थः । अस्तु तर्हि दुःखत्रयं जिहासितञ्च तद् भवतु, भवतु च तच्छक्यहानं । सहतामेव शास्त्रगम्य उपायस्तदुच्छेत्तुं तथाप्यत्र प्रेक्षावतां जिज्ञासा न युक्ता । दृष्टस्यैवोपायस्य तदुच्छेदकस्य सुकरस्य विद्यमानत्वात् तत्त्वज्ञानस्य त्वनेकजन्माभ्यासपरम्परायाससाध्यतयाऽतिदुष्करत्वात् । तथा च लौकिकानामाभाणकः ।

ननु यद्यपि दृष्टस्य सौकर्यमितरस्यातिदुष्करत्वं तथापि शास्त्रीयत्वेन समीचीनत्वमिति स एवादर्तव्य इति चेत्तत्राह । तथा चेति । आभाणकोऽन्यायः अर्के समीपे

गृहकोणे प्राङ्गणे वा ईषत्करा अल्पप्रयत्नसाध्याः सुकराश्चेत्यर्थः । सुकरोपीति पञ्चमो विकल्पो न घटत इत्यर्थः ॥ १ ॥

अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् । इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेदिति । सन्ति चोपायाः शतशः शारीरदुःखप्रतीकारायेषत्कराः सुकरा भिषजां वरैरुपदिष्टाः । मानसस्यापि सन्तापस्य प्रतीकाराय मनोज्ञस्त्रीपानभोजनविलेपनवस्त्रालङ्कारादिविषयसंप्राप्तिरुपायः सुकरः । एवमाधिभौतिकस्य दुःखस्यापि नीतिशास्त्राभ्यासकुशलतानिरत्ययस्थानाध्यासनादिः प्रतीकारहेतुरीषत्करः । तथा आधिदैविकस्यापि दुःखस्य मणिमन्त्रौषधाद्युपयोगः सुकरः प्रतीकारोपाय इति । निराकरोति । नेति । कुतः, एकान्तात्यन्ततोऽभावात् । एकान्तो दुःखनिवृत्तेरवश्यम्भावः अत्यन्तो दुःखस्य निवृत्तस्य पु

नरनुत्पादस्तयोरेकान्तात्यन्तयोरभावः एकान्तात्यन्ततोऽभाव इति। षष्ठीस्थाने सार्वविभक्तिकस्तसिः। एतदुक्तं भवति, यथाविधिरसायनादिकामिनीनीतिशास्त्राभ्यासमन्त्राद्युपाययोगेऽपि तस्य तस्याध्यात्मिकादेर्दुःखस्य निवृत्तेरदर्शनादनैकान्तिकत्वं, निवृत्तस्यापि पुनरुत्पत्तिदर्शनादनात्यन्तिकत्वमिति सुकरोऽप्यैकान्तिकात्यन्तिकदुःखनिवृत्तेर्न दृष्ट उपाय इति नापार्था जिज्ञासेत्यर्थः यद्यपि दुःखममङ्गलं तथापि तत्परिहारार्थत्वेन तदपघातो मङ्गलमेवेति युक्तं शास्त्रादौ तत्कीर्त्तनमिति ॥ १ ॥

स्यादेतत् माभूद्दृष्ट उपायो वैदिकस्तु ज्योतिष्टोमादिः सहस्रसंवत्सरपर्य्यन्तः

ननु शास्त्रारम्भे मङ्गलसङ्कीर्तनमेव युक्तं न त्वमङ्गल दुःखोच्चारणमित्याशङ्क्याह। यद्यपीति। स्वर्गश्च दुःख विरोधी स्वसत्तया समूलघातं दुःखमपहन्तीत्युत्तरेणान्वयः।

कर्म्मकलापस्तापत्रयमैकान्तमत्यन्तञ्चापनेष्यतीति । श्रुतिश्च स्वर्गकामो यजेतेति । स्वर्गश्च—यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतञ्च तत् सुखं स्वः पदास्पदमिति । दुःखविरोधी सुखविशेषश्च स्वर्गः, स च स्वसत्तया समूलघातमपहन्ति दुःखं, न चैष क्षयी । तथा हि श्रूयते "अपाम सोमममृता अभूमेति" तत्क्षये कुतोऽस्यामृतत्वसम्भवः । तस्माद्वैदिकस्योपायस्य तापत्रयप्रतीकारहेतोर्मुहूर्त्तयामाहोरात्रमाससंवत्सरादिनिर्वर्त्तनीयस्यानेकजन्मपरम्परायाससम्पादनीयाद्विवेकज्ञानादीषत्करत्वात्पुनरपि व्यर्था जिज्ञासा इत्याशङ्क्याह ।

उक्तेऽर्थे भट्टवार्त्तिकं प्रमाणयति । यन्न दुःखेनेति । ननु श्रुतावमृतशब्दश्रवणात् अक्षयशब्दश्रवणाभावादेतच्छ्रुतिबलेनाक्षयत्वं वैदिकोपायसाध्यस्य स्वर्गस्य न सेत्स्यतीत्याशङ्क्याक्षयत्वमन्तरेणामृतत्वश्रुत्यन्यथानुपप-

त्तौ श्रुतार्थापत्तिसिद्धतत्त्रयत्वमित्याह । तत्त्वयइति ।

दृष्टवदानुश्रविकः सह्यविशुद्धक्षया
तिशययुक्तः । तद्विपरीतः श्रेयान् व्य
क्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥

गुरुपाठादनुश्रूयतइत्यनुश्रवो वे
दः । एत दुक्तं भवति श्रूयत एव परं न
केनापि क्रियत इति तत्र भव आनुश्र
विक इति तत्र प्राप्तो ज्ञात इति यावत् ।
आनुश्रविकोऽपि कर्म्मकलापो दृष्टेन तु
ल्यं वर्त्तत इति ऐकान्तिकात्यन्तिकदुःख
त्रयप्रतीकारानुपायत्वस्योभयत्रापि तु
ल्यत्वात् । यद्यपि चानुश्रविक इति
सामान्याभिधानं तथापि कर्मकलापा
भिप्रायं द्रष्टव्यं । विवेकज्ञानस्याप्यानु
श्रविकत्वात् । तथाच श्रूयते "आत्मा वा
ऽरे ज्ञातव्यः प्रकृतितो विवेक्तव्यः न स
पुनरावर्त्तते न स पुनरावर्त्तते" इति ।

नन्वानुश्रविकइति साधारणवादेन तत्त्वज्ञानस्यापि ग्रहीतुं शक्यत्वात्तस्यानुपायत्वं प्राप्नोतीत्याशङ्क्य दृष्टान्तस्यसवर्णबलेन कर्मकलापस्यग्रहणमित्याह ॥ यद्यपि

चानुश्रविकइति ॥ स्वल्पः सङ्करो हिंसादिनास्येति स्वल्पसङ्करो ऽविशुद्धइत्यर्थः। सपरिहारः सप्रत्ययः सप्रत्यवमर्षेण अभिभवेन सह वर्त्तते इति सप्रत्यवमर्षः सातिशयः हीनसंपदधिकसंपदाभिभूयतइति यावत् ॥

अस्यां प्रतिज्ञायां हेतुमाह । स ह्यविशुद्धिक्षयातिशययुक्तः । अविशुद्धिः सोमादियागस्य पशुबीजादिवधसाधनता । यथाह स्म भगवान् पञ्चशिखाचार्य्यः 'स्वल्पः सङ्करः सुपरिहारः सप्रत्यवमर्ष' इति । स्वल्पः सङ्करो ज्योतिष्टोमादिजन्मनः प्रधानापूर्व्वस्य पशुहिंसादिजन्मनाऽनर्थहेतुना अपूर्व्वेण, सपरिहारः कियतापि हि प्रायश्चित्तेन परिहर्त्तुं शक्यः अथ च प्रमादतः प्रायश्चित्तमपि नाचरितं प्रधानकर्म्मविपाकसमये स च पच्यते, तथापि यावदसावनर्थं प्रसूते तावत् प्रत्यवमर्षेण सहिष्णुतया सह वर्त्तत इति सप्रत्यवमर्षः । मृष्यन्ते हि पुण्यसम्भारोपनीतस्वर्गसुधामहाह्रदावगाहिनः कु

शलः पाथमात्रोपसादितं दुःखत्राह्निकणिकाम्। न च नं हिंस्यात् सर्वा भूतानीति सामान्यशास्त्रं विशेषशास्त्रेणाग्नीषोमीयं पशुमालभेतेत्यनेन बाध्यत इति युक्तं, विरोधाभावात् विरोधे हि बलीयसा दुर्बलं बाध्यते। न चेहास्ति कश्चिद्विरोधः भिन्नविषयत्वात्। तथा हि न हिंस्यादिति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते न त्वक्रत्वर्थत्वमपि अ

नन्वनिषिद्धत्वात्प्रातप्राप्तविषयो हि विधिः प्रतिप्रसव उच्यते, तत्र यथा ज्वरार्तस्याऽविशेषेणान्नपाननिषेधस्य औषधं पिबेदिति प्रतिप्रसवेन बाधः, तथा न हिंस्यादिति निषेधस्योत्सर्गवादस्याग्नीषोमीयं पशुमालभेतेत्यनेनापवादेन बाधः स्यादित्यविशुद्धत्वं न ज्योतिष्टोमादेरिति चेत्तत्राह । न चेति । तत्रापि तर्हि विरोधोऽस्त्विति चेत्तत्राह । नचास्तीति । ननु सिद्धे भिन्नविषयत्वे विरोधाभावेन बाध्यबाधकभावाभावस्तच्चात्र नास्तीति कृत्वा स न स्यादित्याशङ्क्याह । न हिंस्यादितीति । न हिंस्यादिति वाक्यस्य हिंसाऽनर्थकारणमिति विषयो न त्वक्रत्वर्थत्वमपीत्युक्तेऽर्थादग्नीषोमीयपश्वालम्भनवाक्यस्य क्रतूपकारो विषय इति भिन्नविषयत्वमविरोधे कारणमभ्यधायि।

ग्नीषोमीयं पशुमालभेतेत्यनेन वाक्येन
च पशुहिंसायाः क्रत्वर्थत्वमुच्यते ना
नर्थहेतुत्वाभावस्तथा सति वाक्यभेद
प्रसङ्गात्। न चानर्थहेतुत्वक्रत्वनूपकार
कत्वयोः कश्चिद्विरोधोऽस्ति। हिंसा हि
पुरुषस्य दोषमावक्ष्यति क्रतोश्चोपक
रिष्यतीति। क्षयातिशयौ च फलगता
वप्युपाये उपचरितौ क्षयित्वञ्च स्वर्गादेः
सत्त्वे सति कार्य्यत्वादनुमितमिति।

इदानीमनयोर्विषययोरपि विरोधो नास्ति यद्विरोध
निबन्धनः शास्त्रयोर्विरोधः स्यादित्याह ॥ न चेति ॥
क्रनूपकारकत्वमनर्थहेतुत्वेन विरुध्यत इत्युक्तं, तत्र हे
तुमाह। सा हीति। सा यज्ञार्था हिंसानर्थत्वात् पुरुष
स्याधर्मं उत्पादयिष्यति शास्त्रोक्तत्वाच्च यज्ञोपकारं क
रिष्यतीत्यनर्थहेतुत्वक्रतूपकारकत्वयोरेकपक्षालम्बन वा
क्यार्थत्वेन विरोधाभावात्, क्रतूपकारकत्वेनानर्थ
हेतुत्वं न बाध्यत इत्यविशुद्धत्वमेव स्याद्यागादेरिति स्थि
तं। नन्वस्त्वविशुद्धत्वं हिंसायुक्तत्वात् यागादेरुपायस्यो
पेयस्वर्गादिसम्बन्धिनौ तु क्षयातिशयौ कथं तत्सम्बन्धि
त्वेन उपन्यस्तावित्याशङ्क्य कार्यकारणयोरभेदोपचारादि
त्याह। क्षयातिशयौ चेति। ननु स्वर्गादेर्नित्यनिरतिश

यफलत्वेन तत्सम्बन्धाभावान्नकारणे उपचारः तयोरि
त्याशङ्क्यानुमानागमाभ्यामुभौ साधयति । क्षयित्वं चे
त्यादिना, । विमतं स्वर्गादि अनित्यं वस्तुत्वसति कृतक
त्वात्संप्रतिपन्नवदित्यर्थः ।

ज्योतिष्टोमादयः स्वर्गमात्रस्य सा
धनं वाजपेयादयस्तु स्वाराज्यस्येत्य
तिशययुक्तत्वम् । परसम्पदुत्कर्षो हि
हीनसम्पदं पुरुषं दुःखीकरोति । अपाम
सोममभृता अभूमेति चामृतत्वाभिधानं
चिरस्थेमानमुपलक्षयति । यदाहुः ।
आभूतसंप्लवं स्थानममृतत्वं हि भाष्यत
इति ॥

ननु स्वर्गिभिः स्वकर्मानुसारेण सुखमेव भु
ज्यते अतोऽतिशययुक्तत्वं न दोषायेति चेत्तत्राह । प
रसम्पदुत्कर्षइति । या स्वक्षय्यत्वसाधिका अमृतत्वश्रु
तिर्दर्शिता सा चिरावस्थायित्वोपलक्षणेत्याह । अपा
मेति । कर्मोपार्जितस्य लोकस्याक्षय्यत्वे, यद्यथेह कर्म
चितो लोकः क्षीयते एव मेवामुत्र पुण्यचितो लोकः क्षी
यतइत्यादिश्रुतिविरोधः स्यादित्यर्थः,, ॥ ते तं भुक्त्वा
स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्तीत्यादि
भगवतोक्तवचविरोधोपि । अत एव कर्मणः अमृतत्वमा
पेक्षिकमतएव श्रुतिरित्यर्थः । कर्मणा ज्योतिष्टोमादिना

श्रुत एव च श्रुतिः । न कर्मणा न प्रजया धनेन त्यागेनैके नाऽमृतत्त्वमानशुः । परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति । तथा कर्मणा मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः । तथा परे ऋषयो ये मनीषिणः परं कर्मभ्यो ऽमृतत्वमानशुरिति । तदेतत् सर्वमभिप्रत्याह । तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ।

प्रजया पुत्रेण धनेन देवताज्ञानेन दैवन वित्तेन पुत्रेणायं लोको जय्यो विद्यया देवलोकः कर्मणा पितृलोक इति, श्रुत्यन्तरात् कर्मादिभिः पितृदेवमनुष्यलोकान् प्रापुरमृतत्वं न प्रापुः धनेनेत्यत्रापि नञ्संबध्यते, तर्हि कथममृतत्वं प्रापुरित्याशङ्क्याह । त्यागेनैकेनेति । सर्वकर्मसंन्यासस्याध्यज्ञानेन विमला महात्मानः प्राप्तवन्त इत्यर्थः, । तदमृतत्वं स्वर्गएवेति चेत्तत्राह । परेण नाकमिति । तर्हि दूरत्वान्न प्राप्यमिति चेत्तत्राह । निहितं गुहायामिति । बुद्धौ तर्हि तत्प्रत्यासन्नत्वात् पृथग्जनैरपि लभ्यमिति चेत्तत्राह । यद्यतय इति । स्वरूपभूतमपि अविवेकिनां दूरभूतमेतत् प्रकृतिपुरुषविवेकज्ञानं दुःखापघातकारणं नित्यफलमित्यभ्यधायि तन्नोपपद्यते दुःखत्रयाभिभवलक्षणस्य दुःखत्रयध्वंसस्य कृतकत्वेन,

तस्मादानुश्रविकाद् दुःखापघात कोऽदुपायात् । सोमपानादेरविशुद्धाद नित्यसातिशयफलाद्विपरीतो विशुद्धो हिंसादिसङ्करासम्भवान्नित्यनिरतिशय फलोऽसकृदपुनरावृत्तिश्रुतेः ॥ न च कार्यत्वेनानित्यता फलस्य युक्ता । भावरूपस्य कार्यस्य तथाभावात् । दुःखप्रध्वंसनस्य तु कार्यस्यापि तद्वैपरीत्यात् । न च दुःखान्तरोत्पादः कारणाप्रवृत्तौ कार्यानुत्पादात् । विवेकज्ञानोपजननपर्यन्तत्वाच्च कारणप्रवृत्तेः । एतच्चोपरिष्टादुपपादयिष्यते ।

नित्यत्वात् „ तथा च प्रयोगः विमतो दुःखध्वंसो ऽनित्यः कृतकत्वात्, यदेवं तदेवं, यथा स्वर्गादि तथा चाय तस्मात्तथेति चेत्तत्राह । न च कार्यत्वेनेति । ननु कार्यत्वेनानित्यत्वे अनाप्तवचनमात्रं प्रमाणं न भवतीति अनेनानुमानस्य निर्दिष्टत्वादित्याशङ्क्य कार्यत्वे भावत्वमुपाधिरित्याह । भावरूपस्येति । न च साधनव्यापकत्वमित्याह । दुःखत्रयप्रध्वंसेति । ननु प्रध्वंसस्य नित्यत्वेऽप्यन्यद्दुःखजातमुत्पत्स्यत इति चेत्तत्राह ॥ न चेति । तत्र हेतुः कारणेति । दुःखकारणं पुंप्रकृत्योरविवे

कः, । नन्वविवेकस्यानादिकालप्रवृत्तत्वादप्रवृत्तिरनुपपन्नेत्याशङ्क्याह । विवेकेति । उपजननमुत्पत्तिः । उपरिष्टादिति । दृष्टानयोरुपेक्षक इत्यत्र सत्वशब्देन सत्वर

अक्षरार्थस्तु तस्मादानुश्रविकाद्दुःखापघातकात्तद्विपरीतः सत्वपुरुषान्यताप्रत्ययः साक्षात्कारो दुःखापघातको हेतुः अत एव श्रेयान् । आनुश्रविको हि वेदविहितत्वात्तन्मात्रया दुःखापघातकत्वाच्च प्रशस्यः । सत्वपुरुषान्यताप्रत्ययोऽपि प्रशस्यः । तदनयोः प्रशस्ययोर्मध्ये सत्वपुरुषान्यताप्रत्ययः श्रेयान् । कुतः पुनरस्योत्पत्तिरित्यत उक्तम् । व्यक्ताव्यक्तज्ञविज्ञानादिति ।

जस्तमसां साम्यावस्था प्रकृतिरुच्यते यत एवं तस्मात् हिंसादियुक्तादतो विपरीतो ऽनयोश्च द्विवचनविभज्योपपदे तरबीयसुनाविति पाणिनीयसूत्रेण कुत्पत्तिमाह । आनुश्रविको हीत्यादिना । ननु श्रैष्ठ्यानुसारेण व्यक्ताव्यक्तज्ञानादिति कर्मयोगिकः कथमिति चेत्तत्राह । व्यक्तज्ञानेति । पञ्चविंशतितत्वानां श्रवणमनननिदिध्यासनैः प्रधानमहदहङ्कारतन्मात्रेन्द्रियभूतप्रभृतिभ्यो ऽन्योऽहं पुरुष इति साक्षात्कारो भवतीति फलितमाह ।

व्यक्त चाव्यक्तञ्च ज्ञश्च व्यक्ताव्यक्तज्ञाः तेषां विज्ञानं विवेकेन ज्ञानं व्यक्तज्ञानपूर्वकमव्यक्तस्य तत्कारणस्य ज्ञानं तयोश्च पारार्थ्येन आत्मा परो ज्ञायतइति ज्ञानक्रमेणाभिधानं । एतदुक्तं भवति । श्रुतिस्मृतीतिहासपुराणेभ्यो व्यक्तादीन् विवेकेन श्रुत्वा शास्त्रयुक्त्या च व्यवस्थाप्य दीर्घकालादरनैरन्तर्यसत्कारसेवितात् भावनामयाद्विज्ञानादिति । तथा च वक्ष्यति । एवं तत्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषं । अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानमिति ॥ २ ॥

तदेवं प्रेक्षावदपेक्षितार्थत्वेन शास्त्रारम्भं समाधाय शास्त्रमारभमाणः श्रोतृबुद्धिसमाधानाय तदर्थं सङ्क्षेपतः प्रतिजानीते ।

एतदुक्तमित्यादिना । बहुकालं नैरन्तर्येणादरातिशयेनोसेवना-संस्कारजन्य तु ज्ञानादस्योत्पत्तिरित्यर्थः ॥ २ ॥

इत्यार्याया: पर्यवसितं प्रदर्शयन् तदुत्तरार्याया: सङ्गतिमाह। शास्त्रारम्भंसमाधायेति। सिद्धान्तीकृत्य। अयमर्थः। व्यक्ताव्यक्तज्ञलक्षणो विषयइति विषयशास्त्रयोः प्रतिपाद्यप्रतिपादकभावलक्षणः सम्बन्धः कैवल्यं प्रयोजनं दृष्टानुश्रविकविषयविरक्तोधिकारीति। प्रकर्षेणाधीयते स्थाप्यते अत्राखिलमिति प्रधानं अनवस्थाप्रसक्तेरस्य कारणं नास्तीत्यज्ञाणि।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ ३ ॥

मूलप्रकृतिरित्यादिना। सङ्क्षेपतो हि शास्त्रार्थस्य चतस्रो विधाः कश्चिदर्थः प्रकृतिरेव कश्चिदर्थो विकृतिरेव कश्चित्प्रकृतिविकृतिः कश्चिदनुभयरूपः तत्र का प्रकृतिरित्यत्र उक्तम्। मूलेति। मूलं चासौ प्रकृतिश्चेति मूलप्रकृतिः। विश्वस्य कार्यसङ्घातस्य सा मूलं न त्वस्या मूलान्तरमस्ति अनवस्थाप्रसङ्गात्। न चानवस्थायां प्रमाणमस्तीति भावः। नन्वस्त्वनवस्था किं नो बाध्यते इति चेत्तत्राह। न चे

कतमाः पुनः प्रकृतिविकृतयः कियन्त्य श्चेत्यत उक्तम्। महदाद्याः प्रकृतयश्च विकृतयश्च ता इति प्रकृतिविकृतयः सप्त। तथा हि. महत्तत्त्वमहङ्कारस्य प्रकृतिः विकृतिश्च मूलप्रकृतेः एवं अहङ्कारतत्त्वं तन्मात्राणामिन्द्रियाणाञ्च प्रकृतिः विकृतिश्च महतः एवं पञ्च तन्मात्राणि तत्त्वानि भूतानामाकाशादीनां प्रकृतयो विकृतयश्चाहङ्कारस्य। अथ का विकृतिरेव कियती चेत्यत उक्तम्। षोडशकस्तु विकार इति। षोडशसंख्यापरिमितो गणः षोडशकः। तु शब्दो ऽवधारणे भिन्नक्रमः पञ्च म

ति। एतदुक्तं भवति यत्त्वया प्रधानस्य कारणं कल्प्यते तस्य प्रधानार्थत्वे कश्चिद्विशेषो नाङ्गीक्रियते क्रियते वा प्रथमे कल्पे न कारणत्वं तस्यातिशयाभावात्, न ह्यतिशयाभावे प्रकृतिविकारभावः संभवति अथ चेतनत्वनिर्गुणत्वादिलक्षणो विशेषः स्यादिति द्वितीयः कल्पः, तथापि न कारणत्वं अविक्रियत्वात् शक्तिरूपः स्यादिति चेत्तेयायीस्माकीणा शक्तिरेवा-

स्माकीनं प्रधानमिति संज्ञामात्रे विवाद इति एकस्य प्रधानकारणस्यासिद्धौ सर्वासिद्धेर्नानवस्थायां प्रमाणमिति । भिन्नक्रम इति । भिन्नोऽन्यः क्रमो निवेश-स्थानं यस्य स तथा विकारश्चेत्यस्याग्रे इत्यर्थः । ननु

हाभूतानि एकादश इन्द्रियाणीति षोडशको गणो विकार एव न प्रकृतिः । यद्यपि पृथिव्यादीनामपि गोघटवृक्षादयो विकाराः । एवन्तद्विकारभेदानां पयोबीजादीनां दध्यङ्कुरादयः तथापि गवादयो बीजादयो वा न पृथिव्यादिभ्यस्तत्त्वान्तरं तत्त्वान्तरोपादानत्वं च प्रकृतित्वमिहाभिप्रेतमिति न दोषः सर्वेषां गोघटादीनां स्थूलतेन्द्रियग्राह्यता च समेति न तत्त्वान्तरत्वं । अनुभयरूपमाह । न प्रकृतिर्न विकृतिः पुरुष इति । एतत्सर्वमुपरिष्टादुपपादयिष्यत इति ॥ ३ ॥

षोडशको गणो विकार एव न प्रकृतिरित्यवधारणं न घटते यदन्तःपातिनां पृथिव्यादीनां शरीरगोघट-वृक्षादीन्प्रति प्रकृतित्वादिति चेत्तत्राह । यद्यपि चेति । ननु माभूद्गोबीजानां पृथिव्यादेस्तत्त्वान्तरत्वं

तथापि गवाश्वादिजनकत्वेन भूतादीनां प्रकृतित्व मित्याशङ्क्याह । न तत्वान्तरेति । विमता गो घटादयः पृथिव्यादिभ्यस्तत्वान्तरं न भवन्ति स्थूल-त्वादिन्द्रियग्राह्यत्वाच्च प्रसिद्धपृथिव्यादिवत् व्यतिरेके पुरुषवदिति तत्वान्तरत्वाभावे प्रमाणमाह । तदेषा-मिति । उपरिष्टादिति । प्रकृतेर्नहानिरयारभ्येत्यर्थः॥३॥

तमिममर्थं प्रामाणिकं कर्तुमभिम ताः प्रमाणभेदा लक्षणीयाः । न च सा मान्यलक्षणमन्तरेण शक्यं विशेषलक्षणं कर्तुमिति प्रमाणसामान्यं तावल्लक्षय ति ।

दृष्टमनुमानमाप्तवचनं च सर्वप्र माणसिद्धत्वात् । त्रिविधं प्रमाणमि ष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥ ४ ॥

प्रमाणमिष्टमिति । अत्र च प्रमाण मिति समाख्यालक्षपदं तन्निर्वचनं च लक्षणं प्रमीयतेऽनेनेति निर्वचनात् । प्रमांप्रति करणत्वमवगम्यते । तच्चास

उत्तरार्योद्धयप्रतिपाद्यमर्थमाह । तमिममिति । तत्रापि समनन्तरार्याप्रतिपाद्यर्थं प्रथममाह । नचेति । नन्वत्र प्रमाणमिति संज्ञालक्ष्यपदमस्ति न तु लक्षण

न्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिः। बोधश्च पौरुषेयः फलं प्रमा। तत्साधनं प्रमाणमिति । एतेन संशयविपर्ययस्मृतिसाधनेष्वप्रमाणेष्वप्रसङ्गः। संख्याविप्रतिपत्तिं निराकरोति । त्रिविधमिति । तिस्रो विधा यस्य प्रमाणसामान्यस्य तत् त्रिविधं न न्यूनं नाप्यधिकमित्यर्थः । विशेषलक्षणानन्तरं चैतदुपपादयिष्यामः । कतमाः पुनस्तास्तिस्रो विधा इत्यत आह । दृष्टमनुमानमाप्तवचनमिति । एतच्च लौकिकप्रमाणाभिप्रायं लोकव्युत्पादनार्थं

पदमित्याशङ्क्याह । तन्निर्वचनमिति । सम्यगनुभवः प्रमेति प्रमाया लक्षणं सूचयन्नाह । असंदिग्धेत्यादिना। असंदिग्धो ऽधिगतो ऽनधिगतो विषयो यस्या असौ चित्तवृत्ति बोधः पौरुषेयः फलं प्रमेत्यर्थः । विशेषणानां यथा सङ्ख्यं व्यावर्त्यमाह । संशयेति । लक्षणे विशेषण प्रक्षेपो लक्ष्यव्यावृत्त्यर्थः इत्यर्थवत्त्वमेव विशेषणानामित्यर्थः । ननु कश्चिद्विज्ञानमपि प्रमाणत्वेनोरीकृतं चतुर्थं किमिति नोच्यत इत्याशङ्क्य परिहरति । एतच्चेति । त्रैविध्यमित्यर्थः ॥

त्वाच्छास्त्रस्य तस्यैवात्राधिकारात् आ
र्षं तु विज्ञानं योगिनामूर्ध्वस्रोतसां च
न लोकव्युत्पादनायालमिति सदपि
नाभिहितमनधिकारात् । स्यादेतत् ।
माभून्न्यूनमधिकं तु कस्मान्न भवति
सङ्गिरन्ते हि प्रतिवादिन उपमानादी
न्यपि प्रमाणानीत्यत आह । सर्वप्रमा
णसिद्धत्वात् । एष्वेव दृष्टानुमानाप्तवच
नेषु सर्वेषां प्रमाणानां सिद्धत्वादन्तर्भा
वादित्यर्थः । एतच्चोपपादयिष्यते इत्यु
क्तम् । अथ प्रमेयव्युत्पादनाय प्रवृत्तं
शास्त्रं कस्मात्प्रमाणं सामान्यतो विशे
षतश्च लक्षयतीत्यत आह । प्रमेयसि
द्धिः प्रमाणाद्धीति । सिद्धिः प्रतीतिः से
यमार्यार्थक्रमानुरोधेन पाठक्रममनादृ
त्यैव व्याख्याता ॥ ४ ॥

तस्यैव । लौकिकप्रमाणस्येत्यर्थः। ननु पाठक्रमेणैव आर्या आदित एव ग्रन्थान्तरे युष्माभिःकथं न व्याख्या यतइत्यत आह । सेयमिति । आकाङ्क्षायोग्यतासन्नि

सम्प्रति प्रमाणविशेषलक्षणावसरे प्रत्यक्षस्य सर्वप्रमाणेषु ज्येष्ठत्वात् तदधीनत्वाच्चानुमानादीनां प्रतिवादिनाम विप्रतिपत्तेश्च तदेव तावल्लक्षयति।

**प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम्। तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनं च ॥ ५ ॥**

अत्र दृष्टमिति लक्ष्यनिर्देशः। परिशिष्टं तु लक्षणं समानासमानजातीयव्यवच्छेदो लक्षणार्थः। अवयवार्थस्तु विषिण्वन्ति विषयिणमनुबध्नन्ति स्वेन रूपेण निरूपणीयं कुर्वन्तीति यावत्।

धिवशेन पदानामन्वये सत्यर्थबोधकत्वं नान्यथेत्यर्थः। आकाङ्क्षासन्निधानं च योग्यताचेति च त्रयं सम्बन्धकारणत्वेन क्लृप्तं नानन्तरश्रुतिरिति ॥ ४ ॥

प्रत्यक्षस्य प्राथम्ये कारणद्वयमाह। प्रत्यक्षस्येत्यादिना। प्रत्यक्षलक्षणस्य प्रयोजनकथनेनैव तल्लक्षणमप्याह। समानेति। समानासमानजातीयव्यवच्छेदकं लक्षणमिति हि लक्षणस्य लक्षणं समानजातीयव्यवच्छेदकत्वं लक्षणमित्युक्ते विशेषणेऽतिव्याप्तिः स्यात- [illegible]पाह असमानेति। समानजातीयव्यवच्छेदकं गोत्वादि

विषयाः पृथिव्यादयः सुखादयश्चास्म
दादीनां अविशेषाश्च तन्मात्रलक्षणाः
योगिनामूर्द्ध्वस्रोतसां च विषयाः विषयं
विषयं प्रतिवर्त्तते इति प्रतिविषयं
इन्द्रियं वृत्तिश्च सन्निकर्षः । अर्थसन्नि
कृष्टमिन्द्रियमित्यर्थः । तस्मिन्नध्यव
सायस्तदाश्रित इत्यर्थः । अध्यवसायश्च
बुद्धिव्यापारो ज्ञानं उपात्तविषयाणा
मिन्द्रियाणां वृत्तौ सत्यां बुद्धेस्तमो
ऽभिभवे सति यः सत्त्वसमुद्रेकः सोऽध्यव
साय इति च । वृत्तिरिति च ज्ञानमिति
चाख्यायते इदं तत्प्रमाणमनेन यश्चेतना

सामान्यविशेषनिरासार्थम् । ऊर्ध्वस्रोतसां । देवानां ।
नन्विन्द्रियस्य पूर्वस्थानत्यागव्यतिरेकेणान्यत्र वृत्त्यन्य-
थानुपपत्तेरान्ध्यबाधिर्यादिप्रसङ्गः । सर्वेषामित्या-
शङ्क्यार्थापत्तेरन्यथाप्युपपत्तिमाह ॥ वृत्तिश्चेति
ननु व्यवसायो बुद्धिवृत्तित्वाद्बुद्धिधर्मो नेन्द्रियधर्म इ-
त्याशङ्क्य तत्राह । तदाश्रितइति । अध्यवसायस्य
स्वरूपोद्भावौ दर्शयति । अध्यवसायश्चेत्यादिना ।
उक्तलक्षणं प्रमाणं निगमयति । इदं त्विति । एतत्फ-
लमाह । अनेनेति । ननु अनाधेयातिशयस्य पुरुषस्य

शक्तेरनुग्रहस्तत्फलं प्रमाबोधः । बुद्धिसत्त्वं हि प्राकृतत्वादचेतनमिति तदीयोऽध्यवसायोऽप्यचेतनो घटादिवत् । एवं बुद्धिसत्त्वस्य सुखादयोऽपि परिणामभेदाः अचेतनाः पुरुषस्तु सुखाद्यननुषङ्गी चेतनः सोयं बुद्धितत्त्ववर्तिना ज्ञानसुखादिना तत्प्रतिबिम्बितस्तच्छायापत्त्या ज्ञानसुखादिमानिव भवतीति चेतनोऽनुगृह्यते चितिच्छायापत्त्या अचेतनाऽपि बुद्धिस्तदध्यवसायोऽप्यचेतनश्चेतनवद्भवतीति । तथा च वक्ष्यति तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् । गुणकर्तृत्वेऽपि तथा कर्तेव भवतीत्युदासीन इति । अत्रा

चेतनस्याचेतनं प्रमाणं कुतः कीदृशोऽनुग्रह इत्याशङ्क्य परिहरति । बुद्धिसत्त्वं हीत्यादिना । तच्छायापत्त्या बुद्धिस्थ द्रव्यप्राप्त्या ज्ञानसुखादिमानित्युपलक्षणं बुद्धेः रजस्तमसोः समुद्रेके दुःखमोहादिमानिव भवतीत्येतदपि प्रत्येकं विशेषणस्य व्यवच्छेद्यमाह । तत्रेत्यादिना । ननु निश्चयपदप्रक्षेपेणानिश्चय-

व्यवसायग्रहणेन संशयं व्यवच्छिनत्ति
संशयस्यानवस्थितग्रहणेनानिश्चितरू
पत्वात् । निश्चयोऽध्यवसाय इति
चानर्थान्तरम् । विषयग्रहणेन चासद्वि
षयं विपर्ययमपाकरोति प्रतिग्रहणेन
चेन्द्रियार्थसन्निकर्षसूचनादनुमानस्मृ
त्यादयश्च पराकृता भवन्ति ॥ तदेवं
समानासमानजातीयव्यवच्छेदकत्वात्
प्रतिविषयाध्यवसाय इति दृष्टस्य संपू
र्णं लक्षणं । तन्त्रान्तरेषु लक्षणान्तरा
णि तैर्थिकानां न भूषितानि न दूषिता

रूपसंशयपदव्यावृत्तिर्युक्ता न त्वध्यवसायपदप्रक्षेपे-
योत्यत आह । निश्चय इति । यस्माद्विशेषणेनैवा-
लक्ष्यव्यावृत्तिस्तदित्युपसंहारः । ननु नैयायिका-
दीनामन्येषां दर्शनिकानां सम्यगपरोक्षानुभवसाधनं
प्रत्यक्षमित्यादीनि प्रत्यक्षस्य बहूनि लक्षणानि स-
न्त्येतदेव सम्यक् लक्षणमित्यनुचितं । वच इत्याशङ्क्य
परिहरति । लक्षणान्तराणि चेति । एवं प्रत्यक्षं लक्ष-
यित्वाऽनुमानं लिलक्षयिषुः प्रत्यक्षैकप्रमाणवादिनं
चार्वाकं सम्यगर्थकथनप्रमाणभूतोपजीव्यत्वादनुमा-

नि विस्तरभयान्नेति । नानुमानं प्रमाणमिति वदता लोकायतिकेनाप्रतिपन्नः सन्दिग्धो विपर्यस्तो वा पुरुषः कथं प्रतिपाद्यते ॥ न च पुरुषान्तरगता अज्ञान सन्देहविपर्यया: शक्या: अर्वाग्दृशा प्रत्यक्षेण प्रतिपत्तुं । नापि प्रमाणान्तरेणानभ्युपगमात् । अनवधृताज्ञानसंशयविपर्ययस्तु यं कंचन पुरुषं प्रति वर्त्तमानो ऽनवधेयवचनतया प्रे

नमुररीकारयति । नानुमानमित्यादिना । नन्वभिमतेनैव प्रत्यक्षेण पुरुषस्याज्ञानादीनज्ञात्वा ऽज्ञं सन्दिग्धं विपर्यस्तं वा चार्वाकः सम्यगर्थकत्वेऽनेनबोधयिष्यतीति कापि नानुपपत्तिरित्याशङ्क्य परिहरति । न चेति । पुरुषान्तरगता इति हेतुगर्भं विशेषणमज्ञानादीनां । अर्वाग्दृशेति । अर्वाग्दृष्टेर्बाह्यानुग्राहकत्वात्प्रत्यक्षस्यान्तःकरणवृत्तित्वाच्चाज्ञानादीनां ग्राह्यग्राहकभावश्चेन्न घटते तर्हि मा घटिष्ट पुरुषस्याज्ञानादीनज्ञात्वैव बोधाय प्रवर्तिष्यते इत्याशङ्क्याह ॥ अनवधृतेति । अनवधृता अज्ञाता अज्ञानसन्देहविपर्यया यस्य तं यस्मात्प्रत्यक्षेणाज्ञानादीनां प्रतिपत्तिर्न संभवति तस्मात्तत्प्रतिपत्यर्थम-

ज्ञावद्भिरुन्मत्तवदुपेक्षेत । तदनेना ज्ञानादयः परपुरुषवर्तिनोऽभिप्रायभेदाद्वचनभेदाद्वा लिङ्गादनुमातव्या इत्यकामेनाप्यनुमानप्रमाणमभ्युपेयं । तत्र प्रत्यक्षकार्यत्वादनुमानं । प्रत्यक्षानन्तरं लक्षणीयं । तत्रापि सामान्यलक्षणपूर्वकत्वाद् विशेषलक्षणस्यानुमानसामान्यं तावल्लक्षयति । लिङ्गलिङ्गिपूर्वकं

नुमानमनिच्छताप्यं व्वन्नमतिनाङ्गीकर्तव्यमित्युपसंहरति । तदनेनेति । विमतमेतद्वचनं एतदन्तःकरणस्याज्ञाननिमित्तं भवितुमर्हति अबुद्धिपूर्वकत्वे सति असंबद्धवचनात् । मदीयासंबद्धवचनवत् यत्किंचिद्वचनत्वान्मदीयासंबद्धवचनवत् । विमतमेतद्वचनमेतदन्तःकरणस्यसंशयनिमित्तम् । अबुद्धिपूर्वकत्वे सत्यनिश्चितवचनत्वात् मदीयानिश्चितवचनवत् विमतमेतद्वचनमेतदन्तःकरणस्यविपर्यासनिमित्तमबुद्धिपूर्वकत्वेसति मिथ्यानिश्चितवचनत्वात्संप्रतिपन्नवदित्यनुमातव्य इत्यर्थः । प्रत्यक्षानुमानयोरान्तर्यं कारणमाह । तत्र प्रत्यक्षकार्यत्वादिति । तत्र लोकायतिकेनाप्यनुमानेङ्गीकर्त्तव्ये सतीत्यर्थः । अवान्तरसङ्गतिमाह । तत्रापीति । प्रतिबद्धं व्याप्यमित्युक्तेऽविनाभावे सति व्याप्तिः स्यात्तद् व्युदासा-

मिति । लिङ्गं व्याप्यं लिङ्गिव्यापकं शङ्कितसमारोपितोपाधिनिराकरणेन वस्तुतः स्वभावप्रतिबद्धं व्याप्यं येन प्रतिबद्धं तद्व्यापकं । लिङ्गलिङ्गिग्रहणेन विषयवाचिना विषयिणं प्रत्ययमुपलक्षयति ।

यमाह । स्वभावेति । स्वभावोऽविना भावभूत इत्यर्थः । स्वभावप्रतिबद्धत्वं व्यापकत्वमित्युक्तेऽपि विमतं क्षणिकं सत्वादित्यत्र सत्वं स्वभावप्रतिबद्धमस्ति यज्ञे पशुहिंसा अधर्मजनिका हिंसात्वाद्यर्थहिंसावदित्यत्र हिंसात्वं स्वभावप्रतिबद्धमस्ति तद्व्यावृत्यर्थं शङ्कितेत्यादि । अत्र हि प्रथमेनुमाने शङ्कितोपाधिः द्वितीये निषिद्धत्वमुपाधिः समारोपितोपाधिर्विद्यते शङ्कितश्च समारोपितश्च शङ्कितसमारोपितौ तावुपाधीचेति तथा तयोर्निराकरणं तेन यस्मिन्ननुमाने विपक्षबाधकस्तर्को नास्ति तत्र यः शङ्क्यमान उपाधिः स शङ्कितोपाधिर्यत्र त्वयमुपाधिरिति सम्यगारोप्यते स समारोपितोपाधिः । यथा निषिद्धत्वं समारोपितलक्षणं तु साधनाव्यापकत्वे सति साध्यसमव्याप्तिरुपाधिरिति । तदुक्तमुदयनेन ।

एकसाध्याविनाभावे मिथः संबन्धशून्ययोः ॥ साध्याभावाविनाभावः स उपाधिर्यदत्यय इति । भट्टवार्तिकं च । समासभाविनाभावे नैकत्र स्या यदा त-

ङ्गयति । धूमादिर्व्याप्यो वह्न्यादिर्व्यापक इति यः प्रत्ययस्तत्पूर्वकं लिङ्गिग्रहणञ्चात्रर्तनीयं । तेन च लिङ्गमस्यास्तीति पक्षधर्मताज्ञानमपि दर्शितं भवति । तद्व्याप्यव्यापकज्ञानपक्षधर्मताज्ञानपूर्वकमनुमानमिति अनुमानसामान्यं लक्षितं । अनुमानविशेषान् तन्त्रान्तरलक्षितान् अभिमतान्स्मार

दा । समेन यदि नो व्याप्तस्तयोर्हीनोऽप्रयोजकः । इति व्याप्यस्य लक्षणमुक्त्वा व्यापकस्य लक्षणमाह । येन चेति । किं च न ज्ञानज्ञेययोरविभावात् ज्ञेयग्रहणं ज्ञानोपलक्षणार्थमित्याह ॥ लिङ्गलिङ्गिग्रहणेन चेति । तेनैतत्सिद्धमित्याह । धूमादिर्व्याप्य इत्यादि । किं च साध्यधर्मविशिष्टो धर्मो पक्षस्तत्र व्याप्यवृत्तित्वं हेतोः पक्षधर्मत्वमिति ज्ञानम् । तत्सिद्ध्यर्थं लिङ्गिशब्दावृत्त्या व्युत्पत्तिः कर्त्तव्येत्याह लिङ्गिग्रहणमिति । लिङ्गिशब्दः अर्थो गृह्यतेऽनेनेति कृत्वा तद्ग्रहणव्युत्पत्त्या ऊहनीय इत्यर्थः। तदिति । यस्मादेवं तदित्युपसंहारः । व्याप्येत्यादिलक्षणं । अथ वास्तीत्यारभ्य प्रकृते फलितदर्शनं तदिति तदनुमानमिति संबन्धः । तन्त्रान्तरलक्षितानिति ।

यति । त्रिविधमनुमानमिति । तत्सा मान्यतो लक्षितमनुमानं विशेषतस्त्रि विधं । पूर्ववत् शेषवत्सामान्यतो दृष्ट ञ्चेति ॥ तत्र प्रथमं तावद्द्विविधं । वीतमवीतञ्च । अन्वयमुखेन प्रवर्त

तन्त्रान्तरे न्यायदर्शने लक्षितान् अक्षपादाचार्य्यैः तत्पूर्वकं त्रिविधमनुमानं पूर्ववत् शेषवत् सामान्यतो दृष्टं चेति स्वशास्त्रान्तरोक्तानित्यर्थः । ननु शास्त्रान्तरलक्षितानामनुमानविशेषाणां स्वशास्त्रे किमित्यादरणमित्याशङ्क्य परमतमप्रतिषिद्धमनुमतं भवतीति न्यायादित्याह । अभिमतानिति । तत्रैवं त्रैविध्ये सति आदित एवानुमानसामान्यं द्वेधा । वीतमवीतं च तत्रापि पूर्ववत्सामान्यतो दृष्टं विशेषवदवीतमित्याह । तत्रेत्यादिना । वीतस्य लक्षणमाहान्वयमुखेनेति । विधायकं वीतमित्युक्ते निषेधविधायके अवीते अतिव्याप्तिस्तद्व्युदासार्थं प्रवर्तमानमिति विशेषणं तथापि तत्रैवातिव्याप्तिस्तद्व्युदासार्थमन्वयमुखेनेति । ननु अन्वयेनेत्यादिलक्षणमस्तु मुखशब्दस्यानर्थक्यमिति चेन्न । तथा सति केवलान्वयिन एव वीतत्वं न त्वन्वयव्यतिरेकिणस्तद्व्युदासार्थमुक्तं । मुखेनेति । अन्वयमुखेन अन्वयप्राधान्येन । केवलं प्रवर्तते । ननु व्यतिरेको नास्तीति भावः ।

मानं विधायकं वीतं । व्यतिरेकमुखेन प्रवर्त्तमानं निषेधकमवीतं । तत्रावीतं शेषवत् । शिष्यते परिशिष्यते इति शेषः । स एव विषयतया यस्यास्ति अनुमानज्ञानस्य तच्छेषवत् ॥ यदाहुः प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गात् शिष्यमाणे संप्रत्ययः परिशेषइति ॥ अस्य चावीतस्य व्यतिरेकिण उदाहरणमग्रे

अवीतस्य लक्षणमाह । व्यतिरेकमुखेनेति । निषेधकमवीतमित्युक्ते विगता वर्णाः क्षणिका न भवन्ति त एवेति प्रत्यभिज्ञायमानत्वात् ॥ संप्रतिपन्नवदिति वीतेऽतिव्याप्तिस्तन्नुदासार्थमुक्तं । प्रवर्तमानमिति ॥ तत्रैवातिव्याप्तिपरिहारार्थं व्यतिरेकेणेत्यादिलक्षणे अन्वयव्यतिरेकिरूपे वीतेतिव्याप्तिः, तन्निरासाय मुखेनेति ॥ अवीतं व्यतिरेकप्राधान्येन प्रवर्तते वीतं यद्यपि व्यतिरेकेणापि प्रवर्तते अन्वयव्यतिरेकिरूपं तथापि तदन्वयमुखेन स्यान्न तु व्यतिरेकमुखेनेति तन्निरासः । पूर्ववत्सामान्यतो दृष्टं वीतमित्यग्रे अभिधास्यते । इदानीमवीतं शेषवदित्याह ।तत्रेति। शेषवतो व्युत्पत्तिकथनेनैव शेषविषयं शेषवदिति लक्षणमाह । शिष्यतइत्यादिना। उक्तमुत्तरत्र संप्रतिपत्तिमाह ॥ यदाहुरिति । अग्रे

ऽभिधास्यतइति । वीतं द्वेधा । पूर्वव
च्छामान्यतो दृष्टञ्च । तत्रैकं दृष्टस्वल
क्षणसामान्यविषयं यत्तत्पूर्ववत् । पूर्वं
प्रसिद्धं । दृष्टस्वलक्षणसामान्यमिति या
वत् ॥ तदस्य विषयत्वे नास्ति अनुमा
नज्ञानस्येति पूर्ववत् । यथा धूमाद्वह्नि
त्वसामान्यविशेषः पर्वतेऽनुमीयते तस्य
वह्नित्वसामान्यविशेषस्य स्वलक्षणं
वह्निविशेषो दृष्टो रसवत्यां ॥

भिधास्यतइति । असदकरणादित्यत्र कारणभावाच्चे-
त्यनेनेत्यर्थः । दृष्टस्वलक्षणसामान्यविषयं यदिति ॥
दृष्टस्वलक्षणशब्दः सामान्यतो दृष्टाद्व्यवच्छेदार्थः ॥ यद्
द्विविधं वीतं तस्य मध्ये यत्पूर्ववत्तदेवलक्षणाक्रान्तमि
त्यर्थः । विषयं पूर्ववदित्युक्ते सामान्ये । साकाङ्क्षवच-
नमनर्थकं स्यात् ॥ तद्व्युदासार्थमुक्तं सामान्यतो दृ-
ष्टेतिव्याप्ति परिहारार्थमुक्तं । दृष्टस्वलक्षणेति । लक्षणा
व्युत्पत्तावेव स्वलक्षणं संभावयति । पूर्वमित्यादिना ।
पूर्वमित्यस्य व्याख्यानं । प्रसिद्धमिति । प्रसिद्धमित्यस्य
तात्पर्यकथनं दृष्टेत्यादि । वह्नित्वसामान्यविशेष द्र-
व्यादिसामान्यं द्विविधं परमपरं च । अनुवृत्तिप्रत्य-
यकारणं तत्र परं सत्तासदाविषयत्वात्साधानुवृत्ते-
रेव हेतुत्वात् । सामान्यमेव द्रव्यत्वाद्यपरमल्पवि-

अपरञ्च वीतं सामान्यतो दृष्टमदृष्टस्वलक्षणसामान्यविषयं। यथा इन्द्रियविषयमनुमानं॥ अत्र हि रूपादिविज्ञानानां क्रियात्वेन करणवत्त्वमनुमीयते। यद्यपि करणत्वसामान्यस्य छिदादौ वास्यादिस्वलक्षणमुपलब्धम्। तथापि यज्जातीयं रूपादिज्ञाने करणमनुमीयते तज्जातीयस्य करणत्वस्य न दृष्टं स्वलक्षणं प्रत्यक्षेण। इन्द्रियजातीयं हि

षयत्वात्॥ तच्च व्यावृत्तेरपि हेतुत्वात्सामान्यं सद्विशेषाख्यमपि लभते इति प्रशस्तदेवेनोक्तमवान्तरसामान्यस्य विशेषत्वमित्यर्थः॥ अदृष्टेति। न दृष्टं स्वलक्षणं यस्य तददृष्टस्वलक्षणम् अदृष्टस्वलक्षणं च तत्सामान्यं चेति अदृष्टस्वलक्षणसामान्यं तद्विषयोस्य तददृष्टस्वलक्षणसामान्यविषयं सामान्यतो दृष्टमित्यभाणि तस्योदाहरणमाह॥ यथेति॥ ननु अत्रेन्द्रियानुमाने एतल्लक्षणं कथं सिद्ध्यतीत्याशङ्क्याह। अत्र हीति। रूपादिज्ञानानि करणपूर्वकानि क्रियत्वाच्छिदादिक्रियावदित्युक्तं। नन्वस्मिन्ननुमाने छिदादौ वा स्यादेः करणविशेषस्य दृष्टत्वात्। अदृष्टेत्यादिलक्षणासंभवग्रस्तम्। इत्याशङ्क्याह। यद्यपि चेति। किं जातीयं तत्करणमित्यपेक्षायामाह॥ इ-

तत्करणं । न चेन्द्रियत्व सामान्यस्य स्वलक्षणं इन्द्रियविशेषः प्रत्यक्षेण गोचरोऽर्वाग्दृशां । यथा वन्हित्वसामान्यस्य लक्षणं वन्हिः सोयं पूर्ववतः सामान्यतो दृष्टात्सत्यपि वीतत्वेन तुल्यत्वे विशेषः । अत्र च दृष्टं दर्शनं सामान्यत इति सामान्यस्य ।. सार्वविभक्तिकस्तसिः । अदृष्टस्वलक्षणस्य सामान्यविशेषस्य दर्शनमनुमानमित्यर्थः ॥ सर्वं चैतदस्माभिर्न्यायवार्तिकतात्पर्यटीकायां व्युत्पादितमिति नेहोक्तं विस्तरभयादिति । प्रयोजक इति पक्षः घटज्ञानवत्साध्यते तद्विषयत्वादिति हेतुः । अ

न्द्रियेति । ततः किमित्यत आह ॥ न चेति । व्यतिरेकोदाहरणमाह । यथेति । ननु पूर्ववत्सामान्यतो दृष्टाद्भिन्नमेव न भवति वीतत्वाविशेषादित्याह । सोयमिति ॥ अनन्तरोक्तमित्यर्थः ॥ ननु लक्षणेऽदृष्टं पदं लक्ष्ये च दृष्टं पदमिति परस्परविरोधाद्व्याघाते कुतो लक्ष्यलक्षणसंबन्ध इत्याशङ्क्य लक्ष्यव्युत्पत्त्या परिहरति । अत्र च दृष्टमिति । अनुमानश-

न्यपुरुषवदिति दृष्टान्तः। प्रयोजकवृद्ध शब्दश्रवणसमनन्तरं प्रयोज्यवृद्धप्रवृत्ति हेतुज्ञानानुमानपूर्वकत्वाच्छब्दार्थसम्बन्ध ग्रहणस्य स्वार्थसंबन्धज्ञानसहकारिणश्च शब्दस्यार्थप्रत्यायकत्वात् अनुमानपूर्व कत्वमिति। अनुमानानन्तरं शब्दं ल क्षयति। आप्तश्रुतिराप्तवचनं त्विति। आप्तवचनमिति लक्ष्यनिर्द्देशः। परि शिष्टं लक्षणं। आप्ता प्राप्ता युक्तेति यावत्। आप्ता चासौ श्रुतिश्चेति

द्वयोः पूर्वापरभावे कारणमाह। शब्देति। प्रयोज्यवृद्धाः प्रेष्यवृद्धा मध्यमवृद्धास्तेषां प्रवृत्तिर्हेतुर्यस्य ज्ञानस्य तत्तेन ज्ञानेन यदनुमानं तत्पूर्वकत्वाच्छब्दार्थसंबन्धग्रहणस्येति। अयमर्थः। विमतः शब्दः स्वार्थसंबन्धवान् भवितुमर्हति पुरुषधौरेयफलपर्य्यन्तप्रवृत्तिनिमित्तत्वात् संप्रतिपन्नवदिति। यद्वा प्रयोज्यवृद्धानां प्रवृत्तौ हेतुः कारणं यज्ज्ञानं तस्यानुमानं। तत्पूर्वकत्वादिति। अस्मिन्पक्षे प्रयोगः विमता प्रयोज्यवृद्धप्रवृत्तिः शब्दार्थसंबन्धज्ञानपूर्विका पुरुषविशेषफलपर्यन्तप्रवृत्तित्वात्संप्रतिपन्नवदिति। ननु शब्दार्थयोः सबन्धग्रहणेनालमित्याशङ्क्याह। स्वार्थेति। श्रुत्यर्थविज्ञानस्यैव बोधकत्वेन प्रामाण्यात् श्रुतिशब्दः स्वार्थवि-

आप्तश्रुतिः । श्रुतिर्वाक्यजनितं वाक्यार्थज्ञानं । तच्च स्वतः प्रमाणं । अपौरुषेयवेदवाक्यजनितत्वेन च सकलदोषा

ज्ञानोपलक्षणार्थं इत्याह ॥ श्रुतिरिति ॥ किं च विमतो वेदः स्वतः प्रमाणं अनपेक्षप्रमाणत्वात् । संप्रतिपन्नवदित्याह । तच्चेति । तदुक्तं जैमिनिना । औत्पत्तिकशब्दस्यार्थे न संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थे अनुपलब्धेर्थे तत्प्रमाणं बादरायणस्यानपेक्षत्वादिति । ज्ञानसमानज्ञापकत्वं हि ज्ञप्तौ स्वतस्त्वमिष्टं तथा च प्रयोगः प्रामाण्यं स्वतो ज्ञायते ज्ञानैकधर्मत्वात् । ज्ञानत्ववदिति । ये तु सुगता नैयायिकप्रभृतयः प्रमाणानां परतः प्रामाण्यमिच्छन्ति तेषामपरिहार्य्यैवानवस्था स्यात् । उत्पत्तौ ज्ञप्तौ च परतः प्रामाण्यमिच्छन्ति ये नैयायिकादयस्तेषां चेदमनुमानं प्रमाणानां प्रामाण्यं प्रमाणसाधारणकारणातिरिक्तकारणजन्यं ज्ञानं तन्न्यूनवृत्तित्वात् । अप्रामाण्यवदिति । तत्रासिद्धो हेतुः विपक्षे बाधकाभावश्चेति । ननु युक्तत्वप्रतिज्ञामात्रं प्रमाणाभावान्न सेत्स्यतीत्याशङ्क्य युक्तत्वे प्रमाणमाह । अपौरुषेयेति । विमतो वेदोऽपौरुषेयः संप्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वात् आत्मवत् । अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेद इत्यनुमानागमाभ्यामपौरुषेयत्वं वेदस्येति कृत्वा

शङ्कात्रिनिर्मुक्तेर्युक्तं भवति । एवं वेद मूलस्मृतीतिहासपुराणवाक्यजनितमपि ज्ञानं युक्तं भवति । आदिविदुषश्च कपिलस्य कल्पादौ कल्पान्तराधीतश्रुति स्मरणसम्भवः । सुप्तप्रबुद्धस्येव पूर्वेद्यु रवगतानामर्थानामपरेद्युः । तथाचात्र

तज्जनितत्वेन युक्तत्वं तदर्थविज्ञानस्येत्यर्थः । तदुक्तं भट्टाचार्य्यैः । स्वतः सर्वप्रमाणानां प्रामाण्यमिति गृह्यतां । न हि स्वतो ऽसतीशक्तिः कर्त्तुमन्येन शक्यते । तत्रापवादनिर्युक्तिर्वक्तृभावाल्लघीयसी । वेदेष्वेतेषां प्रामाण्यं न शङ्कामपगच्छतीति । विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमिति प्रमाणलक्षणे निर्णीतत्वात् । युक्तत्वमन्यत्राप्यतिदिशति । एवमिति । ननु कल्पादौ हिरण्यगर्भस्य बुद्धिपूर्वकवेदप्रणेतृत्वात् तत्कृतसङ्केतवशाच्च वस्तुबोधकत्वाद्वेदस्य युक्तत्वात्तदर्थविज्ञानस्य । न त्वपौरुषेयवेदजनितत्वेनेत्याशङ्क्य परिहरति । आदिविदुषश्चेति । यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये इति श्रुतेर्हिरण्यगर्भस्य बुद्धिपूर्वकृतिर्वेदो न स्यादित्यर्थः । प्रकृष्टधर्मादिबलाच्चिरकालव्यवहितार्थस्मरणं भवति । तत्र स्मृतिसंवादमाह । तथाचेति । ननु श्रुतिराप्तवचनमिति लक्षणमस्तु । आप्तशब्द-

द्यजैगीषव्यसंवादे भगवान् जैगीषव्यो दशमहाकल्पवर्त्तिजन्मसंस्मरणमात्मन उवाच । दशमहाकल्पेषु विपरिवर्त्तमानेन मयेत्यादिना ग्रन्थसन्दर्भेण आप्तवचनेनायुक्ताः शाक्यं भिक्षुनिर्ग्रन्थकसंसारमोचकादीनामागमाभासाः परिहृता भवन्ति ॥ अयुक्तत्वं चैतेषां विगानाद् विच्छिन्नमूलत्वात् प्रमाणविरुद्धार्थाभि

स्यानर्थक्यमिति चेत्तत्राह । आप्तग्रहणेन चेत्यादि । शाक्या बौद्धाः भिक्षुका अवधूताः निर्ग्रन्थका॰ पक्षाः श्वेतपटाश्च संसारमोचकाः एवं सत्यन्ते । यथा घटभङ्गे तन्मध्यस्थोदकस्य मोक्षस्तथा शरीरे पार्श्वादिना छिन्ने तन्मध्यगतजीवस्य मोक्षः । आदिशब्दाल्लोकायतिकाः तेषां सर्वेषां आगमाभासा निराकृताः स्युरित्येतत् । ननु तेषां अयुक्तत्वे सिद्धे आप्तशब्देन निरासस्तदद्यापि न सिध्यति प्रमाणाभावादिति चेत्तत्राह । अयुक्तत्वं चेति । विगानं वैरूप्यं विप्रतिपत्तिस्तावच्चतुर्विधा नापि बौद्धानां वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकानां वैभाषिकसौत्रान्तिकयोर्बाह्याभ्यन्तरवस्तुस्थित्युररीकारे समानेप्येकस्य प्रत्यक्षेण बाह्यार्थाङ्गीकारोऽपरस्यानुमानेनेत्यवान्तरभेदः विज्ञानैकवादित्वं योगाचारस्य सर्वं

धानाच्च कैश्चिदेव म्लेच्छादिभिः पुरुषापसदैः पशुप्रायैः परिग्रहाच्चोद्धव्यं । तु शून्यवादित्वं माध्यमिकस्येति । एवं यथा यथं सर्वेषामपि विगानं द्रष्टव्यं । छिन्नमूलत्वं निर्मूलत्वं वेदबाह्यत्वमित्यर्थः । यत् सत् तत् क्षणिकं यथा प्रदीपः सतश्चामीभावा इत्यनुमानात् । क्षणिकत्वं पूर्ववस्तुजातस्य प्रत्यभिज्ञाप्रत्यक्षविरुद्धं बौद्धाः शून्यवादी बाह्यार्थविज्ञानवादी सर्वशून्यवादी च भवति । क्रमेणैकस्य विज्ञानद्वयमात्रविषयं प्रत्यक्षज्ञानं प्रत्यभिज्ञाने साक्षादविशिष्टमिह ध्रुवमिति पूर्वापरतया प्रत्यभिज्ञायते । साक्षादिति पदमिछत्तौपूर्वापरविशिष्टद्वयोपलक्षितं स्वरूपैकाकारज्ञानं प्रत्यभिज्ञोत्तरमीमांसकानां तद्विरुद्धार्थाभिधायिनौ क्षणिकत्वमिति पदं तु ज्ञेयरूपं तद्बहिर्वदवभासतइति च बाह्यापह्नवे च प्रत्यक्षे विरुद्धार्थाभिधायी विज्ञानवादी शून्यवाद्यपि सर्वशून्यमिति प्रत्यक्षविरुद्धार्थाभिधायी निमित्तकानां यथेष्टचेष्टाविवादः सर्वप्रमाणविरुद्धो निर्ग्रन्थिकानां । एकस्यैव वस्तुनो ऽस्ति नास्ति इत्यनैकान्तवादः प्रत्यक्षादिविरुद्धः संसारमोचकानां । हिंसावादो न हिंस्यादित्यागमप्रमाणविरुद्धो लोकायतिकानां । देहव्यतिरिक्त आत्मा नास्तीति वादः सर्वप्रमाणविरुद्धः । इत्येवं प्रमाणविरुद्धार्थाभिधानादित्यस्यार्थः । शिष्टापरिग्रहाच्चायुक्तत्वं बोद्धव्यमित्याह । कैश्चिदेवेति । कथं तु शब्देनानुमानाद्यव-

शब्देनानुमानाद् व्यवच्छिनत्ति । वा
क्यार्थो हि प्रमेयो न तु तद्धर्मो वाक्यं
येन तत्र लिङ्गम्भवेत् । न च वाक्यं वा
क्यार्थं बोधयत्सम्बन्धग्रहणमपेक्षते । अ
भिनवकविरचितस्य वाक्यस्यादृष्टपूर्वस्या
ननुभूतचरवाक्यार्थबोधकत्वादिति ।

च्छेदः आप्तवचनस्येत्यत आह । वाक्यार्थो हीति । नन्वस्तु तावद्वाक्यार्थस्य प्रमेयत्वमेतावता कथमनुमानाद्व्यवच्छेदः स्यात् । शब्दस्य तत्कारणत्वात् । यथा धूमेन लिङ्गेन वह्निर्ज्ञायते तथा वाक्येन लिङ्गेन शब्दार्थलिङ्ग्यनुमानं भवेदित्याशङ्क्याह । न तु तद्धर्म इति । धूमस्य वह्निधर्मत्वात् । तल्लिङ्गत्वं न तु वाक्यार्थधर्मत्वं येन तल्लिङ्गं वाक्यं स्यादिति यावत् । ननु यद्यपि धूमाग्निवद्वाक्यार्थयोर्धर्मधर्मिभावाभाव स्तथापि यथा धूमोऽग्निना सम्बन्धिना संबन्धग्रहणापेक्ष एव तद्गमकः । तथा वाक्यमप्यर्थेन संबन्ध ग्रहणापेक्षमेव तद्बोधकमिति घट्टकुट्यामेव प्रभातमिति चेत्तत्राह । नचेति । औत्पत्तिकसूत्रे जैमिनिना शब्दार्थयोर्नित्यसंबन्धे साधितेपि शब्दस्यैव वृद्धव्यवहारतः संबन्धग्रहणापेक्षस्यैवावबोधकत्वात् । पदार्थपूर्वकत्वात्तु वाक्यार्थस्य स्वार्थबोधकत्वे संबन्धग्रहणापेक्षा नास्ति । विशिष्टार्थसंप्रत्ययो हि वाक्यार्थः । एतच्च तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य त-

एवं प्रमाणसामान्यलक्षणेषु तद्विशेषल क्षणेषु च सत्सु यानि प्रमाणान्तराण्यु पमानादीनि प्रतिवादिभिरभ्युपेयन्ते ता न्युक्तलक्षणेष्वेव प्रमाणेष्वन्तर्भवन्तीति॥

तथा हि ॥ उपमानं तावद्यथा गौ स्तथा गवय इति वाक्यं तज्जनिताधी रागम एव । योप्ययं गवयशब्दो गोस

न्निमित्तत्वादिति वाक्यार्थोधिकरणसिद्धान्ते प्रतिपादितं । भूतपूर्वोऽनुभूतोर्थोऽनुभूतचरः । भूतपूर्वे चरडिति पाणिनिस्मरणात् । तथा न भवतीत्यननुभूतचरः । स चासौ वाक्यार्थश्चेति तद्बोधकत्वादिति । एवं प्रमाणत्रयं प्रसाध्य यदुक्तं सर्वेषामुपमानादीनां त्रिष्वेवान्तर्भाव इति तदिदानीं यथा सम्भवमन्तर्भावयति । एवमित्यादिना । तत्र तावद्वृद्धाभिमतस्योपमानस्य शब्देन्तर्भावमाह । तथाहीति । विमत आगम आप्तोक्तत्वात्सम्प्रतिपन्नागमवदित्यर्थः । यत्तु श्रुतातिदेशवाक्यस्य गवयदर्शने गोत्वस्य प्रतीतस्य गवयशब्दोऽभिधानमिति संज्ञासंज्ञिसंबन्धप्रतीतिमुपमानमिच्छति नैयायिकैकदेशी अनवगतं सङ्गतिसंज्ञासमभिव्याहृतवाक्यार्थस्य संज्ञिन्यनुसन्धानमुपमानमिति तस्याप्यनुमानेन्तर्भावमाह । योप्ययमिति । कथमनुमानमित्याशङ्क्य विमतो गवयश-

दृश्यस्य वाचक इति प्रत्ययः सोऽप्यनुमा
नमेव । यो हि शब्दो यत्र वृद्धैः प्रयु
ज्यते सोऽसति वृत्यन्तरे तस्य वाचकः ।
यथा गोशब्दो गोत्वस्य । प्रयुज्यते चैवं
गवयशब्दो गोसदृश इति तस्यैव वाचक
इति तत् ज्ञानमनुमानमेव । यत्तु गव
यस्य चक्षुः सन्निकृष्टस्य गोसादृश्यज्ञानं
तत्प्रत्यक्षमेव । अत एव स्मर्य्यमाणायां

व्दो गोसदृशार्थवाचको भवितुमर्हति लक्षणागुणवृ-
त्यभावेसति वृद्धैस्तत्र प्रयुज्यमानत्वात् । य इत्थं स
तथा यथा गोशब्दो गोत्वस्य तथा चायं तस्मात्तथेति
ज्ञानमनुमानमेवेत्याह । योहीत्यादिना । भट्टाभिम-
तस्योपमानस्याप्तोक्तत्वादागमत्वं नैयायिकैकदेश्यभि-
मतस्य व्याप्तिग्रहणादर्थप्रतीतिजनकत्वादनुमानमि-
त्युक्तं । ननु वनं गतस्य नागरिकस्यासन्निहितग-
वये मदीयगोसदृशोयमिति ज्ञानस्याप्तोक्तिव्याप्तिग्रह-
णजनितत्वाभावात् । शब्दानुमानाभ्यां पृथगुपमान-
प्रमाणत्वमाशङ्क्य तस्य प्रत्यक्षान्तर्भाव इत्याह । य-
त्त्विति । ननु तर्हि ग्राम्यस्य वनगमने गवयदर्शना-
त्स्मर्यमाणायां गवि चानेन सदृशी मदीया गौरित्यु-
त्पन्नस्य ज्ञानस्याप्तोक्तिव्याप्तिग्रहासन्निकर्षजन्यत्वा-
भावात् । पृथगुपमानमित्याशङ्क्य तदपि प्रत्यक्षमि-

गवि गवयसादृश्यज्ञानं प्रत्यक्षं । न ह्यन्यद्गवि सादृश्यमन्यच्च गवये । भूयोऽवयवसामान्ययोगो हि जात्यन्तरवर्ती जात्यन्तरे सादृश्यमुच्यते । सामान्ययोगश्चैकः स चेद् गवयप्रत्यक्षो गव्यपि तथेति नोपमानस्य प्रमेयान्तरमस्ति । यत्र प्रमाणान्तरं भवेदिति

त्याह ॥ अतएवेति ॥ यत एव चक्षुः सन्निकर्षाद्गवयस्य गोसादृश्यज्ञानं प्रत्यक्षमत एवेत्यर्थः । अत एवेति सूचितं हेतुं स्पष्टयति । न हीति । कथमुभयत्र एकमेव सादृश्यमित्याशङ्क्य तद्दर्शयितुं प्रथमं सादृश्यलक्षणमाह । भूयोऽवयवसामान्ययोग इति । भूयसां अवयवानां खुरपुच्छशृङ्गादीनां सामान्यं खुरत्वपुच्छत्वशृङ्गत्वादि तस्य योगः समवायलक्षणः संबन्ध इत्यर्थः । जात्यन्तरशब्दो व्यक्त्यन्तरस्याप्युपलक्षणार्थः । अन्यथैकस्यां जातौ व्यक्तिसादृश्याभावप्रसङ्गः । नन्वस्त्वेवं सादृश्यलक्षणं ततः प्रकृते किमायातमित्याशङ्क्याह । सामान्ययोगश्चेति । ननु यद्यप्यवयवजातिसमवाय एकस्तथापि गोरप्रत्यक्षत्वात् सोऽप्रत्यक्ष इति चेत्तत्राह । सचेदिति । यद्यपि गोरप्रत्यक्षत्वं तथापि भूयोऽवयवजातिसमवायस्य सादृश्यपदार्थत्वात तस्य चोभयत्राप्येकत्वात् य एव गवयत्व-

न प्रमाणान्तरमुपमानमिति । एवमर्था पत्तिरपि न प्रमाणान्तरम् ॥ तथा हि जीवतश्चैत्रस्य गृहाभावदर्शनेन बहि र्भावस्यादृष्टस्य कल्पनं ह्यर्थापत्तिरभि मता । वृद्धानां साप्यनुमानमेव । यदा खल्वव्यापकः सन्नेकत्रनास्ति तदाऽन्य त्रास्ति । यदा ऽव्यापक एकत्रास्ति तदान्यत्र नास्तीति सुकरः स्वशरीरे व्याप्तिग्रहः । तथा च सतो गृहाभावद

जातिसमवायो गवये गव्यपि स एवेति बहुखरत्वा-दिजातियोगलक्षणस्य सादृश्यस्य प्रत्यक्षत्वमित्येतत् । एवमुपमानस्य त्रिष्वपि यथा सम्भवमन्तर्भावमुक्त्वाऽ-धुनाऽर्थापत्तेरनुमानेन्तर्भावमाह । एवमिति । तत्रा-न्तर्भावं दर्शयितुं प्रथममर्थापत्तेर्लक्षणमाह । तथा हीति । जीवतश्चैत्रस्य गृहाभावान्यथाऽनुपपत्त्या ब-हिर्भावस्यार्थादापत्तिरनुमानमित्युक्तं तत्कथमित्या-शङ्क्यानुमानं दर्शयितुं व्याप्तिं तावदाह । यदेति । मृते व्यभिचारनिरासार्थं । सन्निति । जीवन्नित्यर्थः । आकाशे व्यभिचारनिरासार्थमव्यापक इति । अस्त्वे-वं व्याप्तिग्रहस्ततः किमायातमित्यत आह । तथा चे-ति । विमतश्चैत्रो बहिर्भवितुमर्हति जीवित्वे सति गृहे ऽविद्यमानत्वात् न य एवं न स एवं यथा गृहे

र्शनेन लिङ्गेन बहिर्भावदर्शनमनुमानमेव। न च चैत्रस्य क्वचित्सत्वेन गृहाभावः शक्योऽपह्नोतुं येनासिद्धो गृहाभावो बहिर्भावे न हेतुः स्यात्। न च गृहाभावेन वा सत्वमपन्हूयते। येन सत्वमेवानुपपद्यमानमात्मानं न वहिरवस्थापयेत्। तथा हि। चैत्रस्य गृहासत्वेन न सत्वमात्रं वा विरुद्ध्यते गृहसत्वम्वा। न तावद्यत्र क्व च न सत्वस्यास्ति विरोधो गृहासत्वेन भिन्नविषय

विद्यमानो मैत्रो न च तथाऽयं भवति तस्मान्न तथेत्यनुमानं तथा च सति सिद्धमेतत्। ननु भावाभावयोरन्योन्यविरुद्धयोर्बाध्यबाधकभावेन गम्यगमकत्वाभावात् नैतदनुमानं भवतीति पृथगेवार्थापत्तिः प्रमाणमित्याशङ्क्य भावेनाभावो बाध्यते अभावेन च भावो न बाध्यतइति कृत्वा लिङ्गलिङ्गिपूर्वकत्वादनुमानमेव स्यादित्याह। न चेत्यादिना। अविरोधं दर्शयितुं विकल्पद्वयमाह। तथा हीति। प्रथमं प्रत्याह। न तावदिति। यत्र क्व च न सत्वस्येत्युक्तत्वात्। देशसामान्य स्वत्वस्य विषयो गृहलक्षणादेशविशेषो ऽसत्वस्येति भिन्नविषयत्वाद्विरोधो नास्त्यनयोरित्यभिधायि। ननु सामान्यस्य विशेषव्यापक-

त्वात् ॥ देशसामान्येन गृहविशेषाक्षेपेऽपि पाक्षिक इति समानविषयतया विरोध इति चेन्न । प्रमाणविनिश्चितस्य गृहाऽसत्वस्य पाक्षिकतया सांशयिकेन गृहसत्वेन प्रतिक्षेपायोगात् । नापि प्रमाणनिश्चितो गृहाभावः । पाक्षिकमस्य गृहसत्वं प्रतिक्षिपन्सत्वमपि प्रतिक्षेप्तुं सांशयिकत्वं च व्यपनेतुमर्हतीति

त्वाद् वैपरीत्यस्य त्वदुक्तत्वात् चैत्रस्य पक्षप्राप्तेन गृहसत्वेन गृहासत्वस्य निराकरणं पाक्षिकमिति भिन्नविषयत्वादित्यस्य हेतोरसिद्धत्वाद्विरोध एवेत्यभिप्रेत्य शङ्कते । देशसामान्येनेति । परिहरति । नेति । प्रत्यक्षप्रमाणाध्यवसितस्य गृहाभावस्य पक्षप्राप्तत्वेन सांशयिको गृहाभावो ऽपह्नवं कर्तुं नाशक्नोति इत्यभाणि । ननु यदि प्रमाणनिश्चितत्वेन बलित्वं तर्हि गृहाभावश्चैत्रस्य पक्षप्राप्तं गृहस्थत्वं निराकुर्वन् सर्वत्र सत्वमपि प्रतिक्षेपस्य निःसन्दिग्धत्वमपि गृहाभावस्य व्यपनेष्यतीति चेत्तत्राह । नापीति । सत्वस्यापि स्वविषयानुमानप्रमाणाध्यवसितत्वेन प्रबलत्वान् प्रतिक्षेपायोगो गृहासत्वेनेत्यर्थः । तस्मात्सत्वासत्वयोः परस्परविरुद्धयोरपि भिन्नविषयत्वेन बाध्यबाधकभावस्याप्यभावादनुमान-

युक्तं । गृहावच्छिन्नेन चैत्राभावेन गृहे सत्वं विरुद्धत्वात्प्रतिक्षिप्यते । न तु सत्त्वमात्रं तस्य तत्रौदासीन्यात् । तस्माद् गृहाभावेन लिङ्गेन सिद्धेन सता बहिर्भावो ऽनुमीयतइति युक्तं । एतेन विरुद्धयोः प्रमाणयोर्विषयव्यवस्थया ऽविरोधापादनमर्थापत्तेर्विषय इति निरस्तं । अवच्छिन्नानवच्छिन्नयोर्विरोधाभावात् । उदाहरणान्तराणि चार्थापत्तेरेवमनुमानेऽन्तर्भावनीयानीति ।

मेवार्थापत्तिरिति स्थितम् । द्वितीयविकल्पं प्रत्याह । गृहावच्छिन्नेति । तत्रेति । सत्वमात्रेतस्येति । गृहाभावस्य अवान्तरप्रमेयमुपसंहरति । तस्मादिति । उक्तन्यायमन्यत्राप्यतिदिशति । एतेनेति । गृहावच्छिन्नानवच्छिन्नयोर्भिन्नविषयत्वादविरोधापादनन्यायेनेत्यर्थः । विरुद्धयोः प्रमाणयोर्विषयव्यवस्थया यदविरोधप्रतिपादनं तदर्थापत्तेर्विषय इति मन्यन्ते च न तन्निराकृतमित्येतत् । एतेनेति सूचितं हेतुमाह । अवच्छिन्नेति । अवच्छिन्नं प्रमाणं गृहाभावसाधकं अनवच्छिन्नं प्रमाणं सत्वमात्रसाधकं तयोर्भिन्नविषयत्वेनाविरोधादिति यावत् । पीनो देवदत्तो दिवा न भुङ्क्ते एवमादिवचः श्रुतौ रात्रौ भोजनविज्ञानं श्रुतार्थापत्तिरिष्यतइत्येव मादिष्वतिदिशति ।

तदेवमेवानुमानेऽन्तर्भावनीयानि । तस्मान्नानुमानात्प्रमाणान्तरमर्थापत्तिरिति सिद्धम् ॥ एवमभावोऽपि प्रत्यक्षमेव । न हि भूतलस्य परिणामविशेषात्कैवल्यलक्षणादन्यो घटाभावो नाम । प्रतिक्षणपरिणामिनो हि सर्व एव भावा ऋते चितिशक्तेः । स च परिणामभेद ऐन्द्रियक इति । नास्ति प्रत्यक्षादपरप्रमेयान्तरानवरुद्धो विषयो यत्राभावाख्यं प्रमाणान्तरमभ्युपेयमिति । सम्भवस्तु यथा खार्यां द्रोणाढकप्रस्थाद्यव

उदाहरणेति । सहाप्रमेयमुपसंहरति । तस्मादिति । इदानीमभावस्य प्रत्यक्षान्तर्भावमाह । एवमिति । अत्र हेतुमाह । नहीति । भूतलपरिणामविशेषादित्येतावदुक्ते घटशरावोदञ्चनादिरूपेण भूतलपरिणामविशेषस्याभावत्वं तद्व्युदासार्थं कैवल्यलक्षणादित्युक्तं । ननु भूतलस्य परिणाम एव नास्ति कथं तदुक्तिसिद्धिरित्यत आह । प्रतिक्षणेति । अस्तु भूतलपरिणामविशेषात्कैवल्यलक्षणादनन्यत्वं घटाभावस्य तथापि कथं प्रत्यक्षत्वमभावस्येत्यत आह । स चेति । सम्भवस्यानुमानेऽन्तर्भावमाह । सम्भवस्त्विति । वस्तुतः सम्भवोऽनुमानं अविनाभावबलेनार्थप्रतिपत्ति

गमः स चानुमानमेव । खारीत्वं हि द्रोणाद्यविनाभूतं प्रतीतं खार्यां द्रोणादिसत्त्वमवगमयतीति । यच्चानिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमात्रमिति होचुर्वृद्धा इत्यैतिह्यं । यथेह वटे यक्षः प्रतिवसतीति न तत्प्रमाणान्तरमनिर्दिष्टप्रवक्तृकत्वेन सांशयिकत्वात् । आप्तप्रवक्तृकत्वनिश्चये त्वाप्तागम इत्युपपन्नं त्रिविधं प्रमाणमिति ॥ ५ ॥

एवं तावद्व्यक्ताव्यक्तज्ञलक्षणप्रमेयसि

हेतुकत्वात् । सम्प्रतिपन्नानुमानवदित्यर्थः । किं च प्रमाणस्य सतः प्रमाणेष्वन्तर्भावो ज्ञाप्यते ऐतिह्यस्यानिर्दिष्टप्रवक्तृकत्वेन सांशयिकत्वात् । प्रमाणान्तर्भावो नोच्यते इत्याह । यच्चेति । लक्षणमुक्त्वा व्युत्पत्तिमाह । इति होचुरिति । इति ह किलोचुर्वृद्धा इति हेत्यस्याभाव ऐतिह्यम् । यद्वाप्रामाण्यदोषपरिजिहीर्षयाप्तप्रवक्तृकं प्रवाहमात्रमैतिह्यमिति लक्षणमुररी क्रियते । तथाप्याप्तोक्तत्वेनागमान्न भिन्नप्रमाणमित्याह । आप्तेति ॥ ५ ॥

एवं प्रमाणत्रये उपमानादीनां यथा सम्भवं अन्तर्भावमभिधायेदानीं वृद्धादरणपूर्वकमुत्तरग्रन्थसंबन्ध-

ह्यर्थं प्रमाणानि लक्षितानि तत्र व्य
क्तं पृथिव्यादि स्वरूपतः पांसुलपादको
हालिकोऽपि प्रत्यक्षेण प्रतिपद्यते । पूर्व
वत्ताचानुमानेन धूमादिदर्शनाद्वह्न्यादी
नि तद्व्युत्पादनाय मन्दप्रयोजनं शा
स्त्रमिति दुरधिगममनेन व्युत्पाद्यं । त
त्र यत्प्रमाणं यत्र शक्तं तदुक्तलक्षणे
भ्यः प्रमाणेभ्यो निष्कृष्य दर्शयति ।

सामान्यतस्तु दृष्टादतीन्द्रियाणां प्र
तीतिरनुमानात् । तस्मादपि चासिद्धं
परोक्षमाप्तागमात्सिद्धम् ॥ ६ ॥

सामान्येति । तु शब्दः प्रत्यक्षपूर्ववद्
भ्यां विशिनष्टि । सामान्यतो दृष्टादनु
मानादध्यवसायादतीन्द्रियाणां प्रधान
पुरुषादीनां प्रतीतिः । चितिच्छायाप

माह । एवं तावदित्यादिना । पांसुलौ पांसुमन्तौ पादौ यस्य स पांसुलपादकः पामरः । अपूर्वं कर्म सूक्ष्मं । तथा च भट्टवार्तिकं । फलाय विहितं कर्म क्षणिकं चिरभाविने । तत्सिद्धिर्नान्यथेत्येवमपूर्वमिति गम्यते इति ॥ ६ ॥

त्तिः बुद्धेरध्यवसाय इत्यर्थः । उपलक्ष
णं चैतच्छेषवत् इत्यपि द्रष्टव्यं । त
त्किं सर्वेष्वतीन्द्रियेषु सामान्यतो दृष्ट
मेव प्रवर्तते । तथा च यत्र तन्नास्ति
महदाद्यारम्भक्रमे स्वर्गापूर्वदेवतादौ च
तेषामभावः प्राप्त इत्यत आह । त
स्मादपीति । तस्मादपीत्यतात्रैव सिद्धे
चकारग शेषवदित्यपि समुच्चितं ॥ ६ ॥

स्यादेतद्यथा गगनकुसुमकूर्मरोमश
शविषाणादिषु प्रत्यक्षमप्रवर्तमानं तद
भावमवगमयति । एवं प्रधानादिष्वपि
तत्कथं तेषां सामान्यतो दृष्टादिभ्यः सि
द्धिरित्यत आह ।

अतिदूरात्सामीप्यादिन्द्रियघातान्म
नोऽनवस्थानात् । सौक्ष्म्याद्व्यवधाना
दभिभवात्समानाभिहाराच्च ॥ ७ ॥

अतिदूरादिति । अनुपलब्धिरिति
वक्ष्यमाणं सिंहावलोकनन्यायेनानुष
ञ्जनीयं । यथा उत्पतन् वियति पत

न्नी अतिदूरतया सन्नपि प्रत्यक्षेण नोपलभ्यते। समीप्यादित्यत्राप्यतिर नुवर्त्तनीयः। यथा लोचनस्थमञ्जनमतिसामीप्यान्न दृश्यते। इन्द्रियघातोऽन्धत्वबधिरत्वादिः। मनोऽनवस्थानात्। यथा कामाद्युपहतमनाः स्फीतालोकमध्यवर्तिनमिन्द्रियसन्निकृष्टमर्थं न पश्यति। सौक्ष्म्यात्। यथेन्द्रियसन्निकृष्टं परमाण्वादि प्रणिहितमना अपि न पश्यति। व्यवधानात्। यथा कुड्यादिव्यवहितं राजदारादि न पश्यति। अभिभवात्। यथाऽहनि सौरैर्भाभिरभिभूतं ग्रहनक्षत्रमण्डलं न पश्यति। समानाभिहारात्। यथा तोयदविमुक्तानुदबिन्दून् जलाशये न पश्यति। चकारोऽनुक्तसमुच्चयार्थः। तेनानुद्भवोऽपि सङ्गृहीतः। तद्यथा क्षीराद्यवस्थायां दध्याद्यनुद्भवान्न दृश्यते। एतदुक्तम् भवति। न प्रत्यक्षनिवृत्ति

मात्राद्वस्त्वभावो भवति । अतिप्रसङ्गा त् । तथा हि । न हि गृहाद्विनिर्गतो गृहजनमपश्यँस्तदभावं विनिश्चिनुया त् । अपि तु योग्यप्रत्यक्षनिवृत्तेरयम भावं विनिश्चिनोति । न च प्रधानपु रुषादीनामस्ति प्रत्यक्षयोग्यतेति न त न्निवृत्तिमात्रात्तदभावनिश्चयो युक्तः प्रा माणिकानामिति ॥ ७ ॥

कतमत्पुनरेतेषु कारणं प्रधानादीना मनुपलब्धावित्यत आह ।

सौक्ष्म्यात्तदनुपलब्धिर्नाभावात्कार्य तस्तदुपलब्धेः । महदादि तच्च कार्यं प्रकृतिसरूपं विरूपं च ॥ ८ ॥

सौक्ष्म्यादिति । अथाभावादेव सप्तमरसवदेतेषामनुपलब्धिः । कस्मा

अतिप्रसङ्गमेव स्पष्टयति । तथा हीति । तर्हि क थ तदभावनिश्चय इत्याकाङ्क्षायामाह । अपित्विति । अयं । प्रमाता । ननु योग्यप्रत्यक्षनिवृतेरसत्त्व-भावाध्यवसायः ततः प्रकृते किमायातं इत्याशङ्क्याह । न चेति ७ ॥

न्न भवतीत्यत आह । नाभावा
त् । कुतः कार्यतस्तदुपलब्धेः ।
तदिति प्रधानं परामृशति । पुरुषो
पलब्धौ तु प्रमाणं वक्ष्यति । सङ्घा
तपरार्थत्वादिति । दृढतरप्रमाणावधा
रिते हि प्रत्यक्षमप्रवर्त्तमानमयोग्यत्वा
न्न प्रवर्त्तत इति कल्प्यते । सप्तमस्तु
रसो न प्रमाणेनावधारित इति न तत्र
प्रत्यक्षस्यायोग्यता शक्याऽध्यवसितुमित्य
भिप्रायः । किं पुनस्तत्कार्यं यतः प्र
धानानुमानं इत्यत आह । महदादित
त्कार्यं । एतच्च यथा गमकं तथोपरि
ष्टादुपपादयिष्यते । तस्य च कार्यस्य
विवेकविज्ञानोपयोगिनी सारूप्यवैरूप्ये
आह । प्रकृतिसरूपं विरूपञ्च । एते
तु उपरिष्टाद्विभजनीये इति ॥ ८ ॥

उक्तस्य ग्रन्थस्य तात्पर्यकथनद्वारा पूर्वपक्षवाद्युक्तं दृष्टान्तं विघटयति । दृढतरेत्यादिना । उपरिष्टादिति । कारणगुणात्मकत्वात्कार्यस्याव्यक्तमपि सिद्धं भेदानां परिणामादित्यत्रेत्यर्थः । सारूप्यवैरूप्ययोर्वि

कार्यात्कारणमात्रं गम्यते सन्ति चात्र वादिनां विप्रतिपत्तयः । तथा हि केचिदाहुः । असतः सज्जायत इति एकस्य सतो विवर्त्तः कार्यजातं न वस्तु सदित्यपरे । अन्ये तु नैयायिकाः सतः असज्जायत इति सतः सज्जायते इति वृद्धाः । तत्र पूर्वस्मिन्कल्पत्रये प्रधानं न सिद्ध्यति । सुखदुःखमोहभेदवत्स्वरूपपरिणामशब्दाद्यात्मकं हि जगत्कारणस्य प्रधानत्वं प्रधानस्य सत्त्वरजस्तमःस्वभावत्वं ।

भागं हेतुमदित्यार्याद्वयेन वक्ष्यतीत्याह । एते त्विति ॥ ८ ॥

उत्तरस्या आर्यायाः सम्बन्धमाह । कार्यादित्यादिना । अत्रेति कारणे बौद्धमतमाहात्र केचिदिति ते हि वर्णयन्ति नानुपमृद्य प्रादुर्भावादिति बीजान्मृत्पिण्डाद्यनुपमृद्यां कुरुघटादीनामुत्पत्तिर्न भवतीति तथैव प्रादुर्भावसम्भवादित्यभिप्रेत्य विनष्टादसतो बीजादेरसत्पूर्वं कारणे विद्यमानमङ्कुरादिजायत इत्यर्थः । वेदान्तिपक्षङ्कक्षीकरोति । एकस्येति । सतो ब्रह्मणो ऽप्रपञ्चस्य प्रपञ्चत्नावंतान्यथा भावो विवर्तः सतः कारणात्परमाण्वादेरसत्कार्यं द्व्यणुकादि जायते इति नैयायिकवैशेषिकपक्षमाह । अन्ये-

यदि पुनरसतः सज्जायेत असत्त्वरूपा ख्यं कारणं सुखादिरूपशब्दाद्यात्मकं कथं स्यात् । सदसतोस्तादात्म्यानुपपत्तेः । अथ एकस्य सतो विवर्तः शब्दादिप्रपञ्चस्तथापि सतः सज्जायतइति न स्यात् । न ह्यद्वयस्य प्रपञ्चात्मकत्वं अपि तु अप्रपञ्चस्य प्रपञ्चात्मकतया प्रतीतिर्भ्रम एव । येषामपि कणभक्षाक्षचरणादीनां सत एव कारणादसतो जन्म तेषामपि सदसतोरेकत्वानुपपत्तेर्न कार्यात्मकं कारणमिति न

त्विति । सांख्यमतमाह । सतः सदिति । एवं पक्षचतुष्टयं प्रदर्श्याद्यपक्षत्रयस्य प्रधानासाधकत्वादनादर्तव्यत्वमाह । तत्रेति । तत्रापि क्रमेण प्रधानासाधकत्वं दर्शयति । असत्त्वइति । सुखत्यादिना । जगत्कारणस्य सत्वरजस्तमःस्वभावत्वं यत् तत्सुखदुःखमोहलक्षणा ये भेदास्तद्वन्तो ये शब्दादयस्तदात्मकत्वं स्वयं दुःखादिरूपशब्दादिस्फुटप्रतीतिविहीनस्यापि स्वान्तर्लीनसुखादिरूपशब्दादिमतः सत एव कार्यस्याभिव्यक्तिहेतुत्वात्तदात्मकत्वमित्यर्थः । अस्त्वेवं ततः किमित्यत आह । यदि पुनरिति ॥

तन्मते प्रधानसिद्धिः अतः प्रधान सिद्ध्यर्थं प्रथमं तावत्सत्कार्यं प्रतिजानीते।

असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात्। शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम् ॥ ९ ॥

असदकरणादिति। सत्कार्यं कारणव्यापारात्प्रागपीति शेषः। तथा च न सिद्धसाधनं नैयायिकतनयैरुद्भावनीयं। यद्यपि बीजमृत्पिण्डादिप्रध्वंसानन्तरमङ्कुरघटाद्युत्पत्तिरुपलभ्य

कारणव्यापारादूर्द्ध्वं सत्कार्यमपि नैयायिकादयोपि मेनिरे स्वतः सांख्यस्य सत्कार्यमिति प्रतिज्ञाज्ञानस्य सिद्धसाधनं नाम दूषणमुद्भाव्यते यैस्तन्निरासार्थमाह। कारणव्यापारादिति। कल्पत्रये प्रधानसिद्ध्यभावात्तत्सिद्ध्यर्थं कारणव्यापारात्पूर्वं सत्कार्यमिति पक्षीकरोति इत्यभ्यधायि। ननु प्रधानसिद्धिर्न भवतीति चेन्माभूत्परार्थया किं तया। किं तु पक्षत्रयस्यादुष्टत्वात्तदुररीकारः किं न स्यात् किं तत्पक्षपातपरिग्रहेणेत्याशङ्क्य पक्षद्वितये त्वार्याव्याख्यानेन दोषमाह क्रमेण। यद्यपीत्यादिना। असदकरणादिति वि-

ते । तथापि न प्रध्वंसस्य कारणत्वमपि तु भावस्यैव बीजाद्यवयवस्य । अभावात्तु भावोत्पत्तौ तस्य सर्वत्र सुलभत्वात्सर्वदा सर्वकार्योत्पादप्रसङ्ग इत्यादिन्यायवार्तिकतात्पर्य्यटीकायामभिहितमस्माभिः । प्रपञ्चप्रत्ययश्चासतिबाधके न शक्यो मिथ्येति वदितुमिति । कणभक्षाक्षचरणमतमवशिष्यते । तत्रेदं प्रतिज्ञातं सत्कार्यमिति । अत्र हेतुमाह । असदकरणात् । असच्चेत्कारणव्यापारात् पूर्वं कार्यं नास्य सत्वं कर्तुं केनापि शक्यं । न हि नीलं शिल्पिसहस्रेणापि पीतं कर्तुं शक्यते । सदसत्वे घटस्य धर्माविति

सतं कार्यं कारणव्यापारात्प्रागपि सम्भवितुमर्हति उत्पद्यमानत्वात् यदेवं तदेवं यथा तिलेषु तैलं न यदेवं न तदेवं यथा नरविषाणमिति सन्घटो ऽसन् घट इति व्यवहारान्यथानुपपत्त्या सत्वासत्वयोर्घटधर्मत्वं स्यादिति शङ्कते । सदसत्वे इति । घटलक्षणधर्मिव्यतिरेकेण सत्वासत्वलक्षणधर्मावस्थानान्यथा-

चेत्। तथाप्यसति धर्मिणि न तस्य धर्म इति सत्वं तदवस्थमेव। तथा च नासत्वं। असम्बद्धेन तदात्मना चासत्वेन कथमसन् घटस्तस्मात्कारणव्यापारादूर्ध्वमिव ततः प्रागपि सदेव का

नुपपत्या भवदुक्तेयमर्थापत्तिरस्मत्पक्षस्यैव साधिका न त्वत्पक्षस्येति कृत्वान्यथानुपपत्तेरन्यथैवोपपत्तिरिति। भवत्पक्षाणामपि किं चिन्नोदीर्यते इत्यभिप्रेत्य परिहरति। तथापीति। किं चासत्वं घटे सम्बद्धं तदात्मकं भवति न वा आद्ये कल्पे ऽसदात्मकस्य घटस्यासत्वधर्मो न स्यात्। सम्बन्धस्य तदात्मकस्य घटसापेक्षत्वात्। सत्वं स्याद्घटस्येति सत्वं तदवस्थमेव द्वितीयं प्रत्याह। असम्बद्धेनेति। असम्बद्धा ऽतदात्मका ऽसत्ववशाद् घटस्यासत्वेऽभ्युपगम्यमाने ऽतिप्रसङ्गः स्यादित्युभयथापि सत्वं स्याद्घटस्येति यावत्। यद्वा सदसत्वयोर्घटधर्मत्वे पूर्वपक्षवादिना शङ्किते एवमेव विकल्प्य प्रथमं प्रति तथापीत्यनेन ग्रन्थेन दूषणं वाच्यं। द्वितीयं प्रत्यसम्बद्धेनेत्यनेनेति। ननूक्तरीत्या व्यवहारदशायां सत्वमस्तु घटादेः कार्यस्य प्रागसत्वमित्याशङ्क्य उपसंहारव्याजेन परिहरति। तस्मादिति। नन्वसतोऽशक्यकरणात् कारणव्यापारात्प्रागपि सत्वं चेत् कार्यस्य तर्हि सतः करणस्याशक्यत्वमित्यत आह। का-

र्यमिति। कारणाच्चास्य सतोऽभिव्यक्तिरेवावशिष्यते। सतश्चाभिव्यक्तिरुपपन्ना। यथा पीडनेन तिलेषु तैलस्यावघातेन धान्येषु तण्डुलानां। दोहनेन सौरभेयीषु पयसः। असतः करणे तु न निदर्शनं किं चिदस्ति। न खल्वभिव्यज्यमानं चोत्पद्यमानं वा क्वचिदसद् दृष्टं। इतश्च कारणव्यापारात्प्राक् सदेव कार्यमित्याह। उपादानग्रहणात्। उपादानानि कारणानि तेषां ग्रहणं कार्येण सम्बन्धः। उपादानैः कार्यस्य सम्बन्धादिति यावत्। एतदुक्तं भवति कार्येण सम्बद्धं कारणं कार्यस्य जनकं सम्बन्धकार्यस्यासतो न सम्भवति तस्मात्सदिति। स्यादेतत् असम्बद्धमेव कारणैः कार्यं कस्मान्न जन्यते।

रणाच्चास्येति। सत एवाभिव्यक्तिः कारणमित्यत्र दृष्टान्तमाह। यथेत्यादिना। सैव प्रतिज्ञा सम्बद्ध्यमानत्वात्। तद्वदेवेति सर्वसम्भवाभावादित्यस्यायमर्थः। सैव प्रतिज्ञा तच्छक्तत्वात्। तद्वदेव इति ग्र-

तथा चासद्धेवोत्पत्स्यते इत्यत आह।
सर्व्वसम्भवाभावात्। असम्बद्धस्य
जन्यत्वे असम्बद्धत्वाविशेषेण सर्वं का
र्य्यजातं सर्व्वस्माद्भवेत्। न चैतदस्ति
तस्मान्नासम्बद्धं असम्बद्धेन जन्यते।
अपि तु सम्बद्धं सम्बद्धेन जन्यते इति।
यथाहुः सांख्यवृद्धाः। असत्वान्नास्ति
सम्बन्धः कारणैः सत्वसङ्गिभिः। अस
म्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थि
तिरिति। स्यादेतत्। असम्बद्धमपि
सत् तदेव करोति। यत्र यत्कारणं
शक्तं शक्तिश्च कार्यदर्शनादवगम्यते
तेन नाव्यवस्थेत्यत आह॥ शक्तस्य
शक्यकरणात्। सा शक्तिः शक्तकारणा
श्रया सर्वत्र वा स्याच्छक्ये एव वा।
सर्व्वत्र चेत्तदवस्थैवाव्यवस्था। शक्ये
चेत् कथमसति शक्ये तत्रेति वक्तव्यं।

क्तस्य शक्यकरणादित्यस्यायमर्थः। कार्यस्यासत्त्वेपि
कारणगतशक्तिविशेषस्यैव प्रतिनियतकार्यजनकत्वा-

शक्तिभेद एव स तादृशो यतः किंचिदेव कार्यं जनयेत् न सर्वमिति चेद्धन्त भोः शक्तिविशेषः कार्यसम्बद्धो वाऽसम्बद्धो वा । सम्बद्धत्वे नासता सम्बन्ध इति सत्कार्यं । असम्बद्धत्वे सैवाव्यवस्थेति सुष्टूक्तं शक्तस्य शक्यकरणादिति । इतश्च सत्कार्यमित्याह । कारणभावाच्च । कार्य्यस्य कारणात्मकत्वात् । न हि कारणाद्भिन्नं कार्यं कारणं च सदिति । कथं तदभिन्नं कार्यमसद्भवेत् । कार्यस्य कारणाभेदसाधनानि च प्रमाणानि । न पटस्तन्तुभ्यो भिद्यते तन्तुधर्मत्वात् । इह यद्यतो भिद्यते तत्तस्य धर्मो न भवति । यथा गौर

द्व्यवस्था न भविष्यतीत्यभिप्रेत्य शङ्कते । शक्तिभेद एवेति । विकल्प्य दूषयति । हन्तेत्यादिना । सैव प्रतिज्ञा तदभिन्नत्वात्तद्वदेवेति कारणाभावाच्चेत्यस्यार्थः । ननु कार्य्यस्य कारणादभेदसिद्धौ कारणसत्वेन कार्यस्यापि सत्वं स्यात् । सत्वभेदोऽद्यापि न सिद्ध्यति प्रमाणाभावादिति चेत्तत्राह । कार्यस्येति ।

श्वरस्य। धर्मश्च पटस्तन्तूनां तस्मान्नार्थान्तरं। उपादानोपादेयभावाच्च नार्थान्तरत्वं तन्तुपटयोः। ययोरर्थान्तरत्वं न तयोरुपादानोपादेयभावः। यथा घटपटयोरुपादानोपादेयभावश्च तन्तुपटयोः। तस्मान्नार्थान्तरत्वमिति। इतश्च नार्थान्तरत्वं तन्तुपटयोः संयोगाप्राप्त्यभावात्। अर्थान्तरत्वे हि संयोगो दृष्टो यथा कुण्डबदरयोः अप्राप्तिर्वा यथा हिमवद्विन्ध्ययोः न चेह संयोगाप्राप्ती तस्मान्नार्थान्तरत्वमिति। इतश्च पटः तन्तुभ्यो न भिद्यते गुरुत्वान्तरकार्याग्रहणात्। इह यद्यस्माद्भिन्नं तत्तस्मात्तस्य गुरुत्वान्तरं कार्यं गृह्यते। यथैकपलिकस्य स्वस्तिकस्य यो गुरुत्वकार्योऽवनतिविशेषस्तस्माद्द्विपलिकस्य स्वस्तिकस्य यो गुरुत्वकार्योऽवनतिभेदोऽधिकः। न च तथा तन्तुगुरुत्वकार्यात्पटगुरुत्वका

र्थान्तरं दृश्यते । तस्मादभिन्नस्तन्तुभ्यः पट इति । तान्येतान्यभेदसाधनान्युक्तानि । तदेवमभेदे सिद्धे तन्तव एव तेन तेन संस्थानभेदेन परिणताः पटो न तन्तुभ्यो ऽर्थान्तरं पटः । स्वात्मनि क्रियाविरोधसम्भवन्धबुद्धिव्यपदेशार्थक्रियाभेदाश्च नैकान्तिकं भेदं साधयितुमर्हन्ति । एकस्मिन्नपि तत्तद्विशेषाविर्भावतिरोभावाभ्यामेतेषामविरोधात् । यथा हि कूर्मस्याङ्गानि कूर्मशरीरे निविशमानानि तिरोभवन्ति निःसरन्ति चाविर्भवन्ति । न तु कूर्मतस्तदङ्गान्युत्पद्यन्ते प्रध्वंसन्ते वा । एवमेकस्या

फलितमाह । तदेवमिति । ननु पट उत्पद्यते पटो विनश्यतीति स्वात्मन्युत्पत्तिविनाशलक्षणविरुद्धक्रिया इह तन्तुषु पट इति व्यपदेशः प्रावरणार्थक्रियाभेदश्चेत्येषामन्यथानुपपत्त्या तन्तुपटयोर्भेद इत्याशङ्क्यार्थापत्तेरन्यथाप्युपपत्तिमाह । स्वात्मनीति । प्रथमे पक्षे दृष्टान्तमाह । यथेति । दृष्टान्तोक्तमर्थं दार्ष्टान्तिके योजयति । एवमिति । विशेषाविर्भाव-

मृदः सुवर्णस्य वा घटमुकुटादयो विशेषा निःसरन्त आविर्भवन्त उत्पद्यन्त इति उच्यन्ते । निविशमानास्तिरोभवन्ति विनश्यन्तीत्युच्यन्ते । न पुनरसतामुत्पादः सतां वा निरोधः । यथाह भगवान् कृष्णद्वैपायनः । नासतो विद्यते भावो नाऽभावो विद्यते सत इति । यथा कूर्मः स्वावयवेभ्यः सङ्कोचिविकासिभ्यो न भिन्नः । एवं घटमुकुटादयोपि मृत्सुवर्णादिभ्यो न भिन्नाः । एवञ्चेह तन्तुषु पट इति व्यपदेशो यथेह वने तिलका इत्युपपन्नः । न चार्थक्रियाभेदोपि भेदमापादयति

तिरोभावयोरेवोत्पत्तिविनाशशब्दवाच्यत्वमस्तु प्रकृते कार्यकारणयोरभेदे किमायातमित्याशङ्क्याह । यथा चेति । तन्तु पट इति व्यपदेशोपि न भेदसाधक इत्याह तद्दृष्टान्तेन । एवं चेति । तिलकसमुदाय एव वनं तद्व्यतिरिक्तं वनं नास्ति तथापि भेदव्यपदेशो भवतीति एतावन्मात्रे विवक्षितोंशो दृष्टान्तोन्यथा तिलकेषु वनमिति वाच्यम् । अर्थक्रियाभेदोपि न भेदहेतुरित्याह । नचेति । ननु तन्तवः

एकस्यापि नानार्थक्रियादर्शनात् । यथैक एव वन्हिर्दाहकः पाचकः प्रकाशकश्चेति । नाप्यर्थक्रियाव्यवस्था वस्तुभेदे हेतुः । तेषामेव समस्तव्यस्तानामर्थक्रियाव्यवस्थादर्शनात् । यथा प्रत्येकं विष्टयो वर्त्मदर्शनलक्षणामर्थक्रियां कुर्वन्ति । न तु शिबिकावहनं । मिलितास्तु शिबिकां वहन्ति । एवन्तन्तवः प्रत्येकं प्रावरणमकुर्वाणा अपि मिलिता आविर्भूतपटभावाः प्रावरिष्यन्ति । स्यादेतत् । आविर्भावः पटस्य कारणव्यापारात् प्राक् सन् असन्वा । असंश्चेत्प्राप्तं तर्ह्यसदुत्पादनं । अथ सन् कृतं

सीवनादिलक्षणामेवार्थक्रियां कुर्वन्ति पटस्तु प्रावरणादिलक्षणामेवेत्यर्थः । क्रियाव्यवस्थानुपपत्त्या ऽभेदस्तन्तुपटयोरित्याशङ्क्यान्यथाप्युपपत्तिमाह । तेषामिति । तन्तूनामेवेत्यर्थः । विष्टयः । कर्मकराः । व्युष्टिः कर्तुः फलविशेषः तेन च कर्मकर्तारो लक्ष्यन्ते नैयायिको वैशेषिकाश्च पटस्याविर्भावं विकल्प्य खण्डयति । स्यादेतदित्यादिना । आविर्भावार्थः कारणव्यापार

तर्हि कारणव्यापारेण। न हि सति कार्ये कारणव्यापारप्रयोजनं पश्यामः। आविर्भावे चाविर्भावान्तरकल्पनेऽनवस्थाप्रसङ्गः। तस्मादाविर्भूतपटभावास्तन्तवः क्रियन्तइति रिक्तं वचः। मैवम्। अथासदुत्पद्यतइति मते कथमसदुत्पत्तिः। सती असती वा। सती चेत् कृतं तर्हि कारणैः असती चेत् तस्या अप्युत्पत्त्यन्तरमित्यनवस्था। अथोत्पत्तिः पटान्नार्थान्तरं अपि तु पट एवासौ तथापि यावदुक्तं भवति पट इति तावदुक्तं भवति उत्पद्यत इति।

इत्यपि न वाच्यम्। अनवस्थाप्रसङ्गादित्याह। आविर्भावेचेति। रिक्तं। प्रमाणशून्यं। अनवस्थाख्यतर्कस्य प्रथितमूलत्वख्यापनाय प्रतिवादिग्रहः सत्त्वान्तरमेवेति प्रतिबन्दिग्रहेणानवस्थां परिहरति सिद्धान्ती। अथासदित्यादिना। उक्तानवस्थालक्षणदोषपरिजिहीर्षया पटोत्पत्त्योरैक्यं शङ्कते। अथोत्पत्तिरिति। पटोत्पत्त्योरभेदश्चेत्तर्हि पर्यायशब्दावेतौ स्याताभित्यभिप्रेत्य परिहरति। तथापीति। अस्त्वेव ततः किमित्यत आह। ततश्चेति। किं च पटोत्पत्त्योरैक्ये प-

ततश्च पट इत्युक्ते उत्पद्यतइति न वा-
च्यं । पौनरुक्त्यात् । विनश्यतीत्यपि
न वाच्यं । उत्पत्तिविनाशयोर्युगपदे-
कत्र विरोधात् । तस्मादियं पटोत्पत्तिः
स्वकारणसमवायो वा स्वसत्तासमवायो
वा । उभयथापि नोत्पद्यते । अथ च
तदर्थानि कारणानि व्यापार्यन्ते । एवं

ट इत्युक्ते उत्पत्तेरपि लभ्यमानत्वात् । उत्पत्तिविना-
शयोश्च विरोधात्पटो नश्यतीत्यपि न वक्तव्यमित्या-
ह । विनश्यतीत्यपीति । यस्मादियमुत्पत्तिर्विचार्य-
माणानां योगं धारयति । तस्मादिति । स्वकारणेन
समवायिलक्षणेन समवायः स्वसत्तया वापरसामान्येन
समवाय इत्ययुतसिद्धानामाधेयाधारभूतानां यः स-
म्बन्ध इहेति प्रत्ययहेतुः सः समवायः पटोत्पत्तिः ।
ननु उभयथापि नोत्पद्यते इत्यस्तु । प्रकृते किमाया-
तमित्याशङ्क्याह । अथचेत्यादि । तथापि तव को
लाभ इत्याशङ्क्य सत्त्वं नः समीहितमित्याह । एवं
सत इति । पटादेः सत एवकार्यत्वमस्तु । न चावि-
र्भावलक्षणसत्क्रियाजननाय कारणव्यापार इति यु-
क्तं । आविर्भावस्यापि पूर्वं सत्त्वादिति कृत्वा का-
रणव्यापारात्प्रागभिव्यक्तेरसत्त्वे कार्यस्य च पटस्यासत्त्वं
नास्तीत्यर्थः । तस्माद्यत्रोभयोः समो दोषः परिहा-

सत एव पटादेः आविर्भावाय कारणापेक्षेत्युपपन्नं । न च पटरूपेण कारणानां सम्बन्धः । तद्रूपस्याक्रियात्वात् । क्रियासम्बन्धित्वाच्च कारणानां । अन्यथा कारणत्वाभावात् । तस्मात् सत्कार्यमिति पुष्कलम् ॥ ९ ॥

तदेवं प्रधानसाधनानुगुणं सत्कार्यमुपपाद्य यादृशं तत्प्रधानं साधनीयं

रोपि वा समः नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणा इति न्यायात्पटाविर्भावखण्डनं सदसदादिविकल्पजातेन त्वयास्मान् प्रति नोद्भावनीयमुत्पत्तावपि समानत्वाद्दोषपरिहारयोरित्यनुकूलं। त्वदुक्तरीत्यास्मदुक्तरीत्या समत्वात् अस्मदभिप्रेतस्य सिद्धत्वाच्चेत्युक्तम् । ननु अस्मत्पक्षे पटरूपाणि कारणानि कुर्वन्तीति सदुक्तिस्त्वत्पक्षबाधिकेति चेत्तत्राह । न चेति । ननु पटरूपं क्रिया माभूत् कारणेषु क्रियायातमित्याशङ्क्याह । क्रियेति । विमतानि क्रियासम्बद्धानि कारकत्वात्संप्रतिपन्नवदित्युक्तम् । ननु साधनं भवतु साध्यं माभूत् विपक्षे बाधकतर्काभावात् । अप्रयोजको हेतुरित्याशङ्क्य विपक्षे बाधकं तर्कमाह । अन्यथेति । सहाप्रमेयमुपसंहरति । तस्मादिति । पुष्कलमिति । प्रचुरमित्यर्थः ॥ ९ ॥

तादृग्धर्मादर्शयितुं विवेकज्ञानोपयोगि
नी व्यक्ताव्यक्तसारूप्यवैरूप्ये तावदाह ।

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रि
तं लिङ्गं । सावयवं परतन्त्रं व्यक्तं
विपरीतमव्यक्तम् ॥ १० ॥

हेतुमत् । हेतुः कारणं तद्वत् ।
यस्य च यो हेतुः तस्य तमुपरिष्टाद्व
क्ष्यति । अनित्यं विनाशि तिरोभावी
ति यावत् । अव्यापि सर्वं परिणामिनं
न व्याप्नोति । कारणेन हि कार्यमा
विष्टं न कार्येण कारणं । न च बुद्ध्या
दयः प्रधानं व्याप्नुवन्तीत्यव्यापकाः
सक्रियं परिस्पन्दवत् यथा हि बुद्ध्या
दयः उपात्तमुपात्तं देहं त्यजन्ति देहा
न्तरं चोपाददतइति । तेषां परिस्पन्द

वृत्तानुवादपूर्वकमुत्तरग्रन्थस्य तात्पर्यमाह । तदे-
वमिति । उपरिष्टादिति । प्रकृतेर्संहारानित्यत्रेत्यर्थः ।
ननु कार्याविर्भावतिरोभावयोरेवोत्पत्तिविनाशशब्द
वाच्येनोक्तत्वात् । एतद्व्याख्याने पूर्वोक्तव्याघात इ-
त्यत आह । तिरोभावीति । आविष्टं । व्याप्तं । ननु

इति । शरीरपृथिव्यादीनां च पारस्प न्द: प्रसिद्ध एव । अनेकं प्रति पुरुषं बुद्ध्यादीनां भेदात् । पृथिव्याद्यपि शरी रघटादिभेदेनानेकमेव । आश्रितं स्वका रणमाश्रितं बुद्ध्यादिकार्याणामभेदेऽपि कथं चिद्भेदविवक्षया आश्रयाश्रयिभा वः । यथेह वने तिलका इत्युक्तं लिङ्गं प्रधानस्य । यथा चैते बुद्ध्यादयः प्रधा नस्य लिङ्गं तथोपरिष्टाद्वक्ष्यति । प्रधानं तु न प्रधानस्य लिङ्गं पुरुषस्य लिङ्गं भवेदिति भावः । सावयवमिति । अवयवावयविसंयोगस्सयोगी अवयवनं अवयवो अवयवानां अवयविनां मिथः संश्लेषो मिश्रणं संयोग इति यावत् ।

सांख्यमते कार्यकारणयोरभेदात्कथमाश्रयाश्रयिभाव इत्याशङ्क्य परिहरति । अभेदेपीति । कथं चिदि- ति । व्यवहारदशायां भिन्नार्थक्रियाकर्तृत्वेनेति या- वत् । ननु प्रधानेनापि पुमानालिङ्ग्यते वक्ष्यते हि संघातपरार्थत्वादिति व्यक्ताव्यक्तयोः साधारणलिङ्गिलि- ङ्गत्वं तत्कथमव्यक्तवैधर्म्यमित्यत आह । प्रधानं त्वि

अप्राप्तिपूर्विका प्राप्तिः संयोगः तेन सह वर्त्तत इति सावयवं । तथा हि । पृथिव्यादयः परस्परं संयुज्यन्ते ॥ एवमन्येऽपि । न तु प्रधानस्य बुद्ध्यादिभिः संयोगस्तादात्म्यात् । नापि सत्त्वरजस्तमसां परस्परं संयोगः अप्राप्तेरभावात् । परतन्त्रं बुद्ध्यादि बुद्ध्या स्वकार्ये ऽहङ्कारे जनयितव्ये प्रकृत्यापूरोऽपेक्षते । अन्यथा तु क्षीणा सती नालमहङ्कारं जनयितुमिति स्थितिः । एवमहङ्कारादिभिरपि स्वकार्यजनने इति सर्वं स्वकार्ये प्रकृत्यापूरमपेक्ष्यते । तेन परां प्रकृतिं अपेक्षमाणं कारणमपि स्वकार्योपजनने परतन्त्रं व्यक्तं

ति । संयोगस्य लक्षणमाह । अप्राप्तिपूर्विकेति । प्राप्तिः संयोग इत्युक्ते समवायेतिव्याप्तिः । तन्निरोधार्थमुक्तं । अप्राप्तिपूर्विकेति । ननु यद्यपि कार्यकारणयोस्तादात्म्यसंयोगो नास्ति तथापि प्रधानस्वरूपस्य गुणत्रयस्य कार्यकारणभावात् संयोगः सम्बन्ध इति सावयवं प्रधानमपीत्यत आह । नापीति । प्रकृ-

विपरीतमव्यक्तं व्यक्तात् । अहेतुमन्नि
त्यं । व्यापि निष्क्रियं । यद्यप्यव्यक्त
स्यास्ति परिणामलक्षणा क्रिया तथापि
परिस्पन्दो नास्तीति । एकमनाश्रितं
अलिङ्गमनवयवं स्वतन्त्रमव्यक्तं ॥१०॥

तदनेन प्रबन्धेन व्यक्ताव्यक्तयोर्वैध
र्म्यमुक्तं सम्प्रति तयोः साधर्म्यं पुरुषाच्च
वैधर्म्यमाह ।

त्रिगुणमविवेकि विषयः सामान्यम
चेतनं प्रसवधर्मि । व्यक्तं तथा प्रधा
नं तद्विपरीतस्तथा च पुमान् ॥ ११ ॥

त्रिगुणमित्यादि । त्रयो गुणाः सुख
दुःखमोहा अस्येति त्रिगुणं । तदनेन
त्या पूरं इति । प्रकृतिसाम्राज्यमित्यर्थः । प्रकृतेरपि
कार्यकारणयोः सक्रियत्वम् । परिणामित्वादित्यत
आह । यद्यपीति ॥ १० ॥

शरीरप्रतिष्ठे मनस्यात्मनः संयोगे सति बुद्धिसुख-
दुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारा नवगुणा आत्मनि
जायन्ते इति वैशेषिका मन्यन्ते व्यक्ताव्यक्तयोर्बुद्धिसु-
खदुःखेच्छाद्वेषप्रयत्नाद्यात्मकत्वकथनेन तदपास्तमि-
त्याह । तदनेनेति । तदात्मकत्वादिति । प्रधाना-

सुखादीनामात्मगुणत्वं पराभिमतमपाकृतं । अविवेकि यथा प्रधानं न स्वतो विविच्यते । एवं महदादयोऽपि न प्रधानाद्विविच्यन्ते तदात्मकत्वात् । अथ वा सम्भूयकारिता अत्राविवेकिता । न हि किञ्चिदेकं पर्याप्तं स्वकार्ये ऽपि तु सम्भूय तत्र नैकस्माद्यस्य कस्यचित्केन चित्सम्भव इति । ये त्वाहुः । विज्ञानमेव हर्षविषादमोहशब्दाद्यात्मकं न पुनरितोऽन्यस्तद्धर्मेति तान् प्रत्याह । विषय इति । विषयो ग्राह्यः विज्ञानाद्बहिरिति यावत् । अत एव सामान्यं साधारणं घटादिवत् । अनेकैः पुरुषैर्गृहीतमित्यर्थः । विज्ञानाकारत्वे त्वसाधारण्यात् विज्ञानानां वृत्तिरूपाणां तेऽप्यसाधारणाः स्युः विज्ञानं परेण न गृह्यते परबुद्धेरप्रत्यक्षत्वादित्यभिप्रायः । तथा च

त्मकत्वादित्यर्थः । पर्याप्तं । शक्तं । येत्वाहुरिति । विज्ञानवादिनो बौद्धा इत्येतत् । विप्रक्षे दोषमाह ॥

नर्तकी भ्रूलताभङ्गे एकस्मिन् बहूनां प्रतिसन्धानं युक्तं। अन्यथा तन्न स्यादिति भावः। अचेतनं सर्वएव प्रधानबुद्ध्यादयो ऽचेतनाः। न तु वैनाशिकवच्चैतन्यं बुद्धेरित्यर्थः। प्रसवधर्म्मि। प्रसवरूपो धर्म्मोयः सो ऽस्यास्तीति प्रसवधर्म्मि। प्रसवधर्म्मेति वक्तव्ये मत्वर्थीयः प्रसवधर्मस्य नित्ययोगमाख्यातुं सरूपविरूपपरिणामाभ्यां न कदाचिदपि वियुज्यतइत्यर्थः। व्यक्तवृत्तमव्यक्तेतिदिशति। तथा प्रधानं यथा व्यक्तं तथा ऽव्यक्तमित्यर्थः। ताभ्यां वैधर्म्यं पुरुषस्याह। तद्विपरीतस्तथा च पुमान्। स्यादेतत्। अहेतुमत्त्वनित्यत्वादिप्रधानसाधर्म्यमस्ति पुरुषस्य। एवमनेकत्वं व्यक्तसाधर्म्यं तत्कथमुच्यते तद्विपरीतः पुमानि

विज्ञानमिति। तात्पर्यमाह। तथाचेति। असाधारणत्वे सतीत्यर्थः। तथाचेत्यार्यागतपदनिरस्याशङ्कामाह। स्यादेतदित्यादिना॥ ११॥

त्यत आह । तथा च पुमानिति । चकारोऽप्यर्थः । यद्यपि अहेतुमत्त्वादिकं साधर्म्यं तथाप्यत्रैगुण्यादिवैपरीत्यमस्येत्यर्थः ॥ ११ ॥

त्रिगुणमित्युक्तं तत्र के ते त्रयो गुणाः किञ्च तदुपलक्षणमित्यत आह ।

प्रीत्यप्रीति विषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः । अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥ १२ ॥

गुणा इति । परार्थाः सत्त्वं लघुप्रकाशकमित्यत्र च सत्त्वादयः क्रमेण निर्दिक्ष्यन्ते । तदनागतावेक्षणेन तन्त्रयुक्त्या प्रीत्यादीनां यथासंख्यं वेदितव्यं । एतदुक्तं भवति । प्रीतिः सुखं प्रीत्यात्मकः सत्त्वगुणः । अप्रीतिर्दुःखं अप्रीत्यात्मको रजोगुणः । विषादो मोहो विषादात्मकस्तमोगुण

तन्त्रयुक्त्येति । तन्यते व्युत्पाद्यते ऽस्मिन्निति तन्त्रं शास्त्रं तस्य युक्तिस्तया । आत्मशब्दस्य भावपर्यायशब्दैः सम्बध्यमानत्वात् । येषामिति बहुवचनं प्रीतिरात्मा यस्येति वक्तव्ये सतीति ज्ञातव्यं ।

इत्यर्थः। ये तु मन्यन्ते न प्रीतिर्दुःखाभावादतिरिच्यते एवं दुःखमपि न प्रीत्यभावादन्यदिति तान् प्रत्यात्मग्रहणं नेतरेतराभावाः सुखादयोऽपि तु भावाः। आत्मशब्दस्य भाववचनत्वात्। प्रीतिरात्मा भावो येषां ते प्रीत्यात्मानः। एवमन्यदपि व्याख्येयं। भावरूपता चैषामनुभवसिद्धा। परस्पराभावात्मकत्वे तु परस्पराश्रयापत्तेरेकस्याप्यसिद्धेरुभयासिद्धिरिति भावः। स्वरूपमेषामुक्त्वा प्रयोजनमाह। प्रकाशप्रवृत्तिनियमार्था इति। अत्रापि यथासंख्यमेव। रजः प्रवर्तकत्वात्सर्वत्र लघुसत्त्वं प्रवर्तयेत्। यदि तमसा गुरुणा न नियम्येत।

नन्वेषां भावरूपत्वे सिद्धे आत्मशब्देनेतरेतराभावरूपाद्व्यावर्तनं युक्तं तद्व्याप्यसिद्धं प्रमाणाभावादित्याशङ्क्यानुभवं प्रत्यक्षं प्रमाणमाह। भावरूपताचेति। विपक्षे दोषमाह। परस्पराभावात्मकत्वेति। दुःखसिद्धौ तदभावात्मकप्रीत्या सिद्धिः प्रीतिसिद्धौ च तदभावात्मकदुःखसिद्धिरित्यन्योन्याश्रयादिति भा-

तमो नियतन्तु क्वचिदेव प्रवर्तयतीति भवति तमो नियमार्थं । प्रयोजनमुक्त्वा क्रियामाह । अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च । वृत्तिः क्रिया । सा च प्रत्येकमभिसम्बध्यते । अन्योन्याभिभववृत्तयः । एषामन्यतमेनार्थवशादुद्भूतेनान्यदभिभूयते । तथा हि सत्वं रजस्तमसी अभिभूय शान्तामात्मनो वृत्तिं प्रतिलभते । एवं रजः सत्वतमसी अभिभूय घोरां एवं तमः सत्वरजसी अभिभूय मूढामिति । अन्योन्याश्रयवृत्तयः । यद्यप्याधाराधेयभावेन नायमर्थो घटते । तथापि यदपेक्षया यस्य क्रिया स तस्याश्रयः । तथा हि । सत्वं प्रवृत्तिनियमावाश्रित्य रजस्तमसोः प्रकाशेनोपकरोति । रजः

वः । ननु सर्वेषां प्रधानत्वादन्योन्याश्रयावृत्तित्वम् । न समस्तगुणानामित्यत आह । यद्यपीति । नन्वन्योन्यजनकत्वे हेतुमत्त्वमित्युक्तं व्याघातो गुणानामत्यत्राह । जननं चेति । अस्त्वेवं ततः किमित्यत

प्रकाशनियमावाश्रित्य प्रवृत्येतरयोः । तमः प्रकाशप्रवृत्ती आश्रित्य नियमेनेतरयोरिति । अन्योन्यजननवृत्तयः । अन्यतमो ऽन्यतममपेक्ष्य जनयति । जननं च परिणामः । स च गुणानां सदृशरूपः । अत एव न हेतुमत्वं तत्वान्तरस्य हेतोरभावात् । नाप्यनित्यत्वं तत्वान्तरे लयाभावात् । अन्योन्यमिथुनवृत्तयः । अन्योन्यसहचराः । अविनाभाववृत्तय इति यावत् । चः समुच्चये । भवति चात्रागमः । अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्र गामिनः । रजसो मिथुनं सत्वं सत्वस्य मिथुनं रजः । तमसश्चापि

आह । स चेति । सदृशरूप इति । ननु सत्वरजआदिरूपतया विसदृशो यस्ततः सत्वादेः परिणतत्वं स्वयमेव रजस्त्वादेस्तत्तत्परिणामादिक्रियाहेतुत्वमात्रमेवेत्यर्थः । यस्माद्गुणानां परिणामः सदृशरूपः । अतएवेति । किं च सत्वादेः परिणामोद्रेकस्तु सत्वादेरेव तत्रैव पुनरालीयमानत्वात् । अनित्यत्वमपि नास्ति गुणानामित्याह । नापीति ॥ १२ ॥

मिथुने ते सत्वरजसी उभे । उभयोः सत्वरजसोर्मिथुनं तम उच्यते । नैषामादिः सम्प्रयोगो वियोगो वोपलभ्यतइति ॥ १२ ॥

प्रकाशप्रवृत्तिनियमार्था इत्युक्तं तत्र के ते इत्थं भूताः कुतश्चेत्यत आह ।

सत्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः । गुरु वरणकमेवतमः प्रदीपवच्चार्थतो वृत्तिः ॥ १३ ॥

सत्वमित्यादि । सत्वमेव लघु प्रकाशकमिष्टं सांख्याचार्यैः । तत्र कार्य्योद्गमने हेतुर्धर्मो लाघवं गौरवप्रतिद्वन्द्वि यतोऽग्नेरूर्ध्वज्वलनं भवति तदेव लाघवं कस्य चित्तिर्य्यग्गमने हेतुर्भवति यथा वायोः । एवं करणानां वृत्तिपटुत्वहेतु लाघवं । गुरुत्वे हि मन्दानि स्युरिति । सत्वस्य प्रकाशात्मकत्वं उक्तं । सत्वतमसी स्वयमक्रियतया स्वकार्यप्रवृत्तिं

यत इति । लाघवात्तमसो लक्षणमाह । रजस्त्व-

प्रत्यवसीदन्ती रजसोपष्टभ्यन्ते। अव सादात्प्रच्याव्य स्वकार्ये उत्साहं प्रयत्नं कार्यन्ते। तदिदमुक्तमुपष्टम्भकं रज इति। कस्मादित्यत उक्तं। चलमिति। तदनेन रजसः प्रवृत्त्यर्थत्वं दर्शितम्। रजस्तु चलतया परितस्त्रैगुण्यं चालयेद्गुरुणा ऽवृण्वता च तमसा तत्र तत्र प्रवृत्तिप्रतिबन्धकेन क्वचिदेव प्रवर्त्यत इति ततस्ततो व्यावृत्त्या तमो नियामकमुक्तं। गुरुवरणकमेव तम इति। एवकारः प्रत्येकं भिन्नक्रमः सम्बध्यते। सत्त्वमेव रज एव तम एव इति। ननु एते परस्परविरोधशीला गुणाः सुन्दोपसुन्दवत् परस्परं ध्वंसन्ते इत्येव युक्तं प्रागेव तेषामेकक्रियाकर्तृतेत्यत आह। प्रदीपवच्चार्थतो वृत्तिः। दृष्टमेतद्यथा वर्तितैले ऽनलविरोधिनी अथ मिलिते

त्यादिना। त्रैगुण्यमिति। आत्मनां गुणद्वयमितरच्चेति त्रीन् गुणानित्यर्थः। प्रागेवेति। दूरत एवा-

सहानलेन रूपप्रकाशलक्षणं कार्यं कुरुतः । तथा च वातपित्तश्लेष्माणः परस्परविरोधिनः शरीरधारणलक्षणकार्यकारिणः । एवं सत्त्वरजस्तमांसि मिथो विरुद्धान्यपि अनुवर्त्स्यन्ति स्वकार्यं करिष्यन्ति च । अर्थत इति पुरुषार्थत इति यावत् । यथा च वक्ष्यति । पुरुषार्थ एव हेतुर्न केन चित्कार्यते करणमिति ।

अत्र च सुखदुःखमोहाः परस्परविरोधिनः स्वस्वानुरूपाणि सुखदुःखमोहात्मकान्येव निमित्तानि कल्पयन्ति । तेषाञ्च परस्परमभिभाव्याभिभावकभावान्नानात्वं तद्यथा । एकैव स्त्री रूपयौवनकुलशील

स्त्वित्येतत् । सत्वरजस्तमसामन्योन्यविरुद्धानामपि-पुरुषार्थहेतुत्वेनानुवर्तनं स्वकार्यकर्तृत्वं च भविष्यति । तैलवर्त्यनलवदित्युक्तं । ननु सिद्धे त्रैगुण्ये तस्योत्पत्तिस्तदद्यापि न सिद्धमित्याशङ्क्य प्रमाणान्तरेणैव तदेव साधयति । अत्रचेत्यादिना । एकैकं निमित्तं सुखदुःखमोहरूपेण नानात्वं भवतीत्यत्र किं प्रमाणमित्यत आह । तेषां चेति । तत्रोदाहरणमाह । तद्यथेति । अविन्दमानमिति । लभमानं । उक्तन्या-

सरूपवती स्वामिनं सुखाकरोति तत्कस्य हेतोः स्वामिनं प्रति तस्याः सुखरूपसमुद्भवात्। सैव स्त्री सपत्नीर्दुःखाकरोति तत्कस्य हेतोः ताः प्रति तस्याः दुःखरूपसमुद्भवात्। एवं पुरुषान्तरं तामविन्दमानं सैव मोहयति तत्कस्य हेतोः तम्प्रति तस्याः मोहरूपसमुद्भवात्। अनया च स्त्रिया सर्वे भावा व्याख्याताः। तत्र यत्सुखहेतुस्तत्सुखात्मकं सत्त्वं। यद्दुःखहेतुस्तद् दुःखात्मकं रजः। यन्मोहहेतुस्तन्मोहात्मकं तमः। सुखप्रकाशलाघवानां त्वेकस्मिन् युगप

यमन्यत्राप्यतिदिशति। अनया चेति। अस्त्वेवैकस्य वस्तुनः सुखदुःखमोहरूपेण नानात्वं प्रकृते किमायातमित्यत आह। तत्रेति। ननु यथा भर्तृसपत्न्यादिगतानां सुखदुःखमोहानां नैमित्तिकानां वस्तुभेदान्निमित्तभेदो ऽनुमीयते तथा सुखप्रकाशलाघवानामपि नैमित्तिकानां वस्तुभेदान्निमित्तभेदो न तु केवलसत्त्वेन सत्त्वं तेषामिति चेत्तत्राह। सुखप्रकाशलाघवानामिति। नैमित्तिकानां एकस्मिन्पुरुषे ज्ञानादीनां एककालसमुद्भवः सह दर्शनादविरोधो भवतु

दुद्भवात्रविरोधः । सहदर्शनात् । तस्मात्सुखदुःखमोहैरिव विरोधिभिरविरोधिभिः एकैकगुणवृत्तिभिः सुखप्रकाशलाघवैर्न निमित्तभेदा उन्नीयन्ते । एवं दुःखोपष्टम्भकत्वप्रवर्त्तकत्वैरेवं मोहगुरुत्वावरणैरिति सिद्धं त्रैगुण्यमिति ॥ १३ ॥

स्यादेतत् । अनुभूयमानेषु पृथिव्यादिष्वनुभवसिद्धाः भवन्त्वविवेकित्वादयः ये पुनः सत्वादयो नानुभवपथमधिरोहन्ति तेषां कुतस्त्यमविवेकित्वं विषयत्वं सामान्यत्वमचेतनत्वं प्रसवधर्म्मित्वं चेत्यत आह ॥

प्रकृते नैमित्तिकभेदे किमायातमित्याशङ्क्योपसंहारद्वारा निमित्तभेदमपाकरोति । तस्मादिति । विमतानि सुखप्रकाशलाघवादीनि अभिन्ननिमित्तकानि अविरोधित्वात् । न यान्येवं तान्येवं यथा सुखदुःखमोहाः । न च तथैतानि भवन्ति न ततस्तथेत्यर्थः । उक्तन्यायेन निमित्तभेदाभावमन्यत्रातिदिशति । एवमिति ॥ १३ ॥

सत्वादय इति । सत्वशब्देन सत्वादीनां साम्यावस्था प्रकृतिर्लक्ष्यते । आदिशब्देन महदादीनि

अविवेक्यादेस्सिद्धिस्त्रैगुण्यात्तद्विपर्ययाभावात्। कारणगुणात्मकत्वात्कार्यस्याव्यक्तमपि सिद्धम्॥ १४॥

अविवेक्यादेरित्यादि। अविवेकित्वमविवेकि। यथा द्व्येकयोर्द्विवचनैकवचने इत्यत्र द्वित्वैकत्वयोरिति। अन्यथा द्व्येकेष्विति स्यादिति। कुतः पुनरविवेकित्वादेस्सिद्धिरित्यत आह। त्रैगुण्यात्। यद्यत्सुखदुःखमोहात्मकं तत्तदविवेक्यादियोगि यथेदमनुभूयमानं व्यक्तमिति। स्फुटत्वादन्वयो नोक्तः। व्यतिरेकमाह। तद्विपर्ययाभावात्। अविवेक्यादिविपर्यये पुरुषे त्रैगु

तत्वानि। निर्देशं। प्रमाणं। यथेति। अत्रापि सन्दिग्धमिति चेत्तत्राह। अन्यथेति। द्वित्वैकत्वयोरविवक्षायां द्वावेकश्चेति त्रयाणां बहुत्वे बहुवचनमेव स्यात्। द्व्येकेष्विति। ननु द्विवचनं द्व्येकयोरित्यर्थः। विमतमविवेक्यादित्रिगुणत्वाद् यदेवं तदेवं यथेदमनुभूयमानं पृथिव्यादीति। अन्वये च हेतुरार्यातो वह्निरुन्नेयः। न यदेवं न तदेवं यथा त्मेति। व्यतिरेक आर्यायामेवोक्तः। इदानीं केवलव्यतिरे

यथोभावात् । अथ वा व्यक्ताव्यक्तं पक्षीकृत्यान्वयाभावेनावीत एव हेतुर्लैंग्यादिति वक्तव्यः । स्यादेतत् । अव्यक्तसिद्धौ सत्यां तस्याविवेकित्वादयो धर्माः सिद्ध्यन्ति । अव्यक्तमेव त्वद्यापि न सिद्ध्यति ॥

तत्कथमविवेकित्वादिसिद्धिरत आह । कारणगुणात्मकत्वादिति अयमभिसन्धिः । कार्यं हि कारणगुणात्मकं दृष्टम् । यथा तन्त्वादिगुणात्मकं पटादि । तथा महदादिलक्षणेनापि कार्येण सुखदुःखमोहरूपेण स्वकारणगतसुखदुःखमोहात्मना भवितव्यं । तथा च तत्कारणं सुखदुःखमोहात्मकं प्रधानमव्यक्तं सिद्धं भवति ॥ १४ ॥

अनुमानमेव वा सर्वव्यक्ताव्यक्तयोः पक्षीकरणेऽन्वयाभावादित्याह । अथ वेति । अभिसन्धिरभिप्रायः ॥ १४ ॥

स्यादेतत् । व्यक्ताद्व्यक्तमुत्पद्यत इति कणभक्षाक्षचरणतनयाः । परमाणवो हि व्यक्तास्तैर्द्व्यणुकादिक्रमेण पृथिव्यादिलक्षणं कार्यं व्यक्तमारभ्यते । पृथिव्यादिषु च कारणगुणक्रमेण रूपाद्युत्पत्तिस्तस्माद्व्यक्ताद्व्यक्तस्य तद्गुणस्य चोत्पत्तेः कृतमदृष्टचरेणाव्यक्तेनेत्यत आह ॥

भेदानां परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च । कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥ १५ ॥

भेदानामिति । भेदानां विशेषाणां महदादीनां भूतानां कार्याणां कारणं मूलकारणमस्त्यव्यक्तं । कुतः कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य । कारणे सत्कार्यमिति स्थितं । तथा च यथा कूर्मशरीरे सन्त्येवाङ्गानि निःसरन्ति

अदृष्टचरेणेति । अदृष्टं पूर्वमदृष्टचरं भूतपूर्वे चरडिति पाणिनिस्मरणेनेत्यर्थः । निविशमानानीत्य-

विभज्यन्ते इदं कूर्मशरीरं एतान्येतस्याङ्गानि इति । एवं निविशमानानि तस्मिन् अव्यक्तीभवन्ति एवं कारणान्मृत्पिण्डाद्धेमपिण्डाद्वा कार्याणि घटमुकुटादीनि सन्त्येवाविर्भवन्ति विभज्यन्ते सन्त्येव पृथिव्यादीनि कारणात्तन्मात्रादाविर्भवन्ति विभज्यन्ते सन्त्येव च तन्मात्राण्यहंङ्कारात् कारणात् सन्त्येवाहङ्कारः कारणान्महतः सन्नेव च महान् परमाव्यक्तादिति । सोऽयंकारणात्परमाव्यक्तात् साक्षात्पारम्पर्येणान्वितस्य विश्वस्य कार्यविभागः प्रतिसर्गे तु मृत्पिण्डं सुवर्णपिण्डं वा घटमुकुटादयो विशन्तोऽव्यक्तीभवन्ति ।

तत्कारणरूपमेवानभिव्यक्तं कार्यमप्रभागदृष्टान्तगतमर्थं दार्ष्टान्तिके योजयति । प्रतिसर्गे इति । संहारइत्यर्थः । कार्योत्पादात्प्राक्कारणरूपमेवाव्यक्तं सत्सु व्यक्तीभवति इति तत्तस्मादित्येतत् कारणमिदं मृद्धेमपिण्डादिव्यक्तमुपलभ्यतइत्यत आह । अनभिव्यक्तमिति । अनभिव्यक्तं कार्यमपेत्य कार्य्यस्या

पेक्ष्याऽव्यक्तं भवति। एवं पृथिव्यादय स्तन्मात्राणि विशन्तः स्वापेक्षया त न्मात्राण्यव्यक्तयन्ति। एवं तन्मात्रा ण्यहङ्कारं विशन्त्यहङ्कारमव्यक्तयन्ति। एवमहङ्कारो महान्तमाविशन् महान्त मव्यक्तयति। महान्प्रकृतिं स्वकारणं विशन् प्रकृतिमव्यक्तयति। प्रकृतेस्तु न क्वचिन्निवेश इति सा सर्वकार्याणा मव्यक्तमेव। सोयमविभागः प्रकृतौ वैश्वरूप्यस्य नानारूपकार्यस्य। स्वा र्थिकः ष्यञ्। तस्मात्कारणे कार्यस्य स त एव विभागाविभागाभ्यामव्यक्तं का रणमस्तीति। इतश्चाव्यक्तमस्तीत्या ह। शक्तितः प्रवृत्तेश्च। कारणशक्ति तः कार्यं प्रवर्तत इति सिद्धं। अश क्तात्कारणात्कार्यस्यानुपपत्तेः। श क्तिश्च कारणगता न कार्यस्याव्यक्ततत्वा

भिव्यक्तिः कारणस्यैव प्रसवः तदभावादव्यक्तमित्यर्थः। कार्योत्पादान्यथानुपपत्त्या कारणे शक्तिरस्तु तथापि

दन्वया न हि सत्कार्यपक्षे कार्यस्याव्यक्तताया अन्यस्यां शक्तौ प्रमाणमस्ति । अयमेव हि सिकताभ्यस्तिलानां तैलोपादानानां भेदो यदेतेष्वेव तैलमस्त्यनागतावस्थं न सिकतास्विति । स्यादेतत् । शक्तितः प्रवृत्तिः कारणकार्यविभागाऽविभागौ च महत एव परमाव्यक्तत्वं साधयिष्यतः कृतं ततः परेणाव्यक्तेनेत्यत आह । परिमाणात् । परिमितत्वात् । अव्यापित्वादिति यावत् । विवादाध्यासिता महदादिभेदा अव्यक्तकारणवन्तः परिमितत्वात् घटादिवत् । घटादयो हि परिमिता

सत्कारणादसत्कार्यं जायतामित्यत आह । शक्तिश्चेति । अत्र हेतुमाह । न हीति । सत्कार्यस्योपपत्त्या कार्यस्याव्यक्तत्वं कारणेऽभ्युपेयं तदेव कारणशक्तत्वं नान्यत्कारणे शक्तिश्चाङ्गीकार्या । कार्यस्याव्यक्तत्वकारणशक्त्या सम्बन्धश्च कल्प्य इति कल्पनागौरवप्रसङ्गान्न प्रमाणमस्तीत्यर्थः । कार्यस्य व्यक्तत्वमेव कारणशक्तिरित्यत्र दृष्टान्तमाह । अयमेव हीति । दृष्टान्तं विवृणोति । घटादयो हीति । ननु मृदादेर्व्यक्तत्वाद-

मृदाद्यव्यक्तकारणकाः दृष्टाः । उक्तमेतत् । यथा कार्यस्य व्यक्तावस्था कारणमेवेति । यन्महतः कारणं तत्परमाव्यक्तं । ततः परतराव्यक्तकल्पनायां प्रमाणाभावात् । इतश्च विवादाध्यासिता भेदा अव्यक्तकारणवन्तः समन्वयात् । भिन्नानां समानरूपता समन्वयः । सुखदुःखमोहसमन्विता हि बुद्ध्यादयोऽध्यवसायादिलक्षणाः प्रतीयन्ते । यानि च यद्रूपसमनुगतानि तानि च तत्स्वभावाव्यक्तकारणानि यथा मृद्धेमपिण्डसमनुगताः घटमुकुटादयो मृद्धेमपिण्डाव्यक्तकारणका इति कारणमस्त्यव्यक्तं भेदानामिति सिद्धं ॥१५॥

व्यक्तत्वं नास्तीति विस्मरणशीलं स्मारयति । उक्तमेतदिति । ननु महत्कारणस्यापि कारणं परतरमव्यक्तमस्त्विति चेन्नेत्याह । ततः परतरेति । अनवस्थितकारणाभ्युपगमे क्वचिदपि निराकाङ्क्षः कार्यप्रत्ययो न स्यादिति मूलक्षतिरित्यर्थः । सरूपता । समानरूपता । भिन्नानां समन्वय इत्युक्तं । समानरूपतामेव दर्शयन् हेतोरसिद्धिं परिहरति । सुखेत्यादिना ॥१५॥

अव्यक्तं साधयित्वा अस्य प्रवृत्ति प्रकारमाह ।

कारणमस्त्यव्यक्तं प्रवर्त्तते त्रिगुणतः समुदयाच्च । परिणामतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात् ॥१६॥

प्रवर्त्तते त्रिगुणत इति । प्रतिसर्गावस्थायां सत्वं रजस्तमश्च सदृशपरिणामानि भवन्ति । परिणामस्वभावा हि गुणा नापरिणम्य्य क्षणमप्यवतिष्ठन्ते तस्मात्सत्वं सत्वरूपतया रजो रजोरूपतया तमस्तमोरूपतया प्रतिसर्गावस्थायामपि प्रवर्त्तते । तदिदमुक्तं । त्रिगुणत इति । प्रवृत्यन्तरमाह । समुदयाच्च । समेत्योदयः समुदयः समवायः समुदयश्च गुणानां न गुणप्रधानभावमन्तरेण सम्भवति । न च गुणप्रधानभावो वैषम्यं विना । न च वैषम्यमुपमर्द्दोपमर्दकभावादृते इति महदादिभावेनैवं प्रवृत्तिर्द्वितीया । स्या

देतत्। कथमेकरूपाणां गुणानामनेक रूपाप्रवृत्तिरित्यत आह। परिणामतः सलिलवत्। यथा हि। वारिदविमुक्त मुदकमेकरसमपि तत्तद्विकारानासाद्य नारिकेलतालताली बिल्वचिरबिल्वतिन्दु कामलकप्राचीनामलककपित्थफलरस तया परिणामान्मधुराम्ललवणतिक्तक षायकटुतया विकल्प्यते॥ एवमेकैकगुण समुद्भवात् प्रधानं गुणमाश्रित्याऽप्रधा नगुणाः परिणामभेदान् प्रवर्त्तयन्ति त दिदमुक्तं। प्रतिप्रतिगुणाश्रयविशे षात्। एकैकगुणाश्रयेण यो विशेषस्त स्मादित्यर्थः॥ १६॥

ये तु तौष्टिका अव्यक्तं वा बुद्धिं वा महान्तं वा ऽहङ्कारं वा इन्द्रियाणि वा भूतानि वा ऽत्मानमभिमन्यमाना स्तान्येवोपासते तान्प्रत्याह।

दृष्टान्तं विवेचयति। यथाहीत्यादिना॥ १६॥
तौष्टिका इति। तुष्ट्या चरन्ति इति। तौष्टिकत्व-

सङ्घातपरार्थत्वात्त्रिगुणादिविपर्ययादधिष्ठानात्। पुरुषोऽस्ति भोक्तृभावात्कैवल्यार्थं प्रवृत्तेश्च ॥ १७ ॥

सङ्घातेत्यादि। पुरुषोऽस्ति अव्यक्तादेर्व्यतिरिक्तः कुतः सङ्घातपरार्थत्वात्। अव्यक्तमहदहङ्कारादयः परार्थाः सङ्घातत्वाच्छयनासनाभ्यङ्गादिवत्, सुखदुःखमोहात्मकतयाऽव्यक्तादयः सर्वे सङ्घाताः। स्यादेतत् शयनासनादयः सङ्घाताः संहतशरीरार्था दृष्टाः। न त्वात्मानं अव्यक्ताद्यतिरिक्तं प्रति परार्थाः। तस्मात्सङ्घातान्तरमेव परं गमयेयुः न तु असंहतात्मानं इत्यत आह। त्रिगुणादिविपर्ययात्। अयमभिप्रायः। सङ्घातान्तरार्थत्वे हि तस्यापि सङ्घातत्वात्। तेनापि सङ्घातान्तरार्थेन भवितव्यं। एवं तेन

सेवाह। अव्यक्तं वेत्यादिना। हेतोरसिद्धिमाशङ्क्य व्यक्तादयः संहताः सुखाद्यात्मकत्वात् सम्प्रतिपन्नव

तेनेत्यनवस्था स्यात् । न च व्यवस्थायां सत्यामनवस्था युक्ता कल्पनागौरव प्रसङ्गात् । न च प्रमाणवत्त्वेन कल्पनागौरवमपि मृष्यतइति युक्तं । संहतत्व स्य पारार्थ्यमात्रेणान्वयात् दृष्टान्तदृष्ट सर्वधर्मानुरोधेनत्वनुमानमिच्छतः सर्वानुमानोच्छेदप्रसङ्ग इति उपपादितं न्यायवार्तिकतात्पर्यटीकायामस्माभिः । तस्मादनवस्थाभिया अस्य असङ्घात

देवेति परिहरति । सुखेति । माभूद्व्यवस्थेति चेत्तत्राह । न चेति । कल्पनागौरवमस्त्वित्यपि न वाच्यमित्याह । न चेति । तर्हि दृष्टान्ते कोर्थो विवक्षित इत्यत आह । सङ्घातस्येति । ननु यदि पारार्थ्यमात्रेणान्वयो न तु संहतार्थत्वेनापि तदा दृष्टान्तदृष्टसर्वधर्माननुवृत्त्या ... स्य साध्यविकलत्वान्नेदमनुमानं भवितुमर्हतीत्यत आह । दृष्टान्तेति । पर्वतो यमग्निमान् धूमवत्त्वान्महानसवदित्यस्यापि विवक्षितांशव्यतिरेकेण दृष्टान्तदृष्टव्यञ्जनादिसर्वधर्माभावेनानुमानत्वं प्रसङ्गः । न चेष्टापत्तिरिति वाच्यमपसिद्धान्तप्रसङ्गात् । सर्वैरनुमानवादिभिर्धूमानुमानस्येष्टत्वादित्यर्थः । यस्मात्सङ्घातानां सङ्घातान्तरार्थत्वे ऽनव-

त्वमिच्छता । अत्रिगुणत्वं विवेकित्वमवि
षयत्वमसामान्यत्वं चेतनत्वमप्रसवधर्मि
त्वञ्चाभ्युपेयं । त्रिगुणत्वादयो हि धर्माः
संहतत्वेन व्याप्ताः तत्संहतत्वमस्मिन्
परे व्यावर्त्तमानं त्रैगुण्यादिव्यावर्त्तयति ।
ब्राह्मणत्वमिव व्यावर्त्तमानं कठत्वा
दिकं व्यावर्त्तयति । तस्मादाचार्य्येण त्रि
गुणादिविपर्य्ययादिति वदता ऽसंहतः
परो विवक्षितः स च आत्मेति सिद्धं ।
इतश्च परः पुरुषोऽस्ति अधिष्ठानात् ।
त्रिगुणात्मकानामधिष्ठीयमानत्वात् । य
द्यत्सुखदुःखमोहात्मकं तत्सर्वं परेणाधि

स्या स्यात् । तस्मादित्युपसंहरन्नार्य्यागतं त्रिगुणादिवि-
पर्य्ययादिति हेतुं व्याचष्टे । तस्मादनवस्थाभियेति ।
ननु सङ्घातत्वे त्रैगुण्यादिसिद्धिः कथमित्यत आह ।
त्रिगुणादय इति । भवन्तु व्याप्तास्ततः किमित्यत
आह । तत्संहतत्वमिति । यस्मादेवं तस्मादित्युपसं-
हरति । विमत आत्मानं संहतो ऽत्रिगुणादिमत्वात् ।
न यदेवं न तदेवं यथा व्यक्तादिः । न च तथाय न
भवति । ततो ऽसंहत इति भावः । सुखदुःखे भो-
क्तृपूर्वके भोक्तृभव्यत्वादोदनादिवदित्युक्तं । बुद्धा-

च्छीयमानं दृष्टं । यथा रथादि यन्त्रा-
दिभिः । सुखदुःखमोहात्मकं चेदं बु-
द्ध्यादि तस्मादेतदपि परेणाधिष्ठात-
व्यं स च परस्त्रैगुण्यादन्य आत्मेति ।
इतश्चास्ति पुरुषो भोक्तृभावात् । भो-
क्तृभावेन भोग्ये सुखदुःखे उपलक्ष-
यति । भोग्ये हि सुखदुःखे अनु-
कूलप्रतिकूलवेदनीये प्रत्यात्ममनुभूये-
ते । तेनानयोरनुकूलनीयेन प्रतिकू-
लनीयेन च केन चिदप्यन्येन भवि-
तव्यं । न चानुकूलनीयाः प्रतिकूलनीया
वा बुद्ध्यादयस्तेषां सुखदुःखाद्यात्मक-
त्वेन स्वात्मनि वृत्तिविरोधात् । तस्मा-
द् योऽसुखाद्यात्मा सोऽनुकूलनीयः प्र-
तिकूलनीयो वा स च आत्मेति । अन्ये

दीनां भोक्तृत्वात् सिद्धसाधनमिति नाशङ्कनीयं । आ-
त्मनि वृत्ते बुद्ध्यादीनां हि सुखाद्यात्मकत्वेन भोग्य-
त्वे स्वयमेव वाऽसिरात्मानं छिनत्तीति वद्यदि भोक्तृ-
त्वं भोग्यत्वं च स्यात्तदात्माश्रय इत्याह । न चेति ।

तत्राह ।—भोग्या दृश्या बुद्ध्यादयः । न च द्रष्टारमन्तरेण दृश्यता युक्ता तेषां । तस्मादस्ति द्रष्टा दृश्यबुद्ध्याद्यतिरिक्तः स चात्मेति । भोक्तृभावात् द्रष्टृभावात् दृश्येन द्रष्टुरनुमानादित्यर्थः । दृश्यत्वं च बुद्ध्यादीनां सुखाद्यात्मकतया पृथिव्यादिवदनुमितं इतश्चास्ति पुरुष इत्याह कैवल्यार्थं प्रवृत्तेश्च । शास्त्राणां महर्षीणां दिव्यलोचनानां च कैवल्यं चात्यन्तिकदुःखत्रयप्रशमलक्षणं न बुद्ध्यादीनां सम्भवति । ते हि दुःखाद्यात्मकाः कथं हि स्वभावाद्वियोजयितुं श्

व्याख्यानान्तरं पूर्वेषामाचार्याणामाह । अन्ये त्वाहुरिति । अस्तु दृश्यत्वं बुद्ध्यादीनां ततः किमित्यत आह । न चेति । विमता बुद्ध्यादयो द्रष्टृपूर्वका दृश्यत्वात् । पृथिव्यादिवदित्यभ्यधायि । दृश्यत्वादिति हेतुरसिद्ध इत्याशङ्क्य परिहरति । दृश्यत्वं चेति । बुद्ध्यादयो दृश्याः सुखाद्यात्मकत्वात् । तद्वदेवेति । दृश्यत्वसिद्धौ पूर्वोक्तमनुमानं सुष्ठु इति भावः । बुद्ध्यादेः कैवल्यमस्त्विति न वाच्यम् । तेषां दुःखाद्यात्मकत्वेन स्वभावाद्वियोजयितुमशक्यत्वादित्याह । कैवल्यं

क्यन्ते । तदतिरिक्तस्य त्वतदात्मनः ततो वियोगः शक्यसंपादः । तस्मात्कैवल्यार्थं प्रवृत्तेरागमानां महाधियां चास्ति बुद्ध्यादिव्यतिरिक्त आत्मेति सिद्धम् ॥ १७॥

तदेवं पुरुषास्तित्वं प्रतिपाद्य स किं सर्वशरीरेष्वेकः किमनेकः प्रतिक्षेत्रमिति संशये तस्य प्रतिक्षेत्रमनेकत्वमुपपादयति ।

जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च । पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ १८ ॥

जननेत्यादिना । पुरुषबहुत्वं सिद्धं कस्मात्जननमरणकरणानां प्रतिनियमात् । निकायविशिष्टाभिरपूर्वाभिर्देहेन्द्रियमनोऽहङ्कारबुद्धिवेदनाभिः पुरुषस्य

चेति । तदतिरिक्तस्येति । बुद्ध्यादिव्यतिरिक्तस्यैतत् । अतदात्मन इति । अदुःखाद्यात्मन इत्यर्थः ॥ हेतुगर्भमिदं विशेषणम् ॥ १७ ॥

निकायविशिष्टाभिरिति । प्राणिसमूहविशिष्टाभिः लोकविशिष्टाभिरिति यावत् । विशिष्टं नाम विशेष-

स्याभिसंबन्धो जन्म । न तु पुरुषस्य परिणामस्तस्यापरिणामित्वात् । तेषामेव च देहादीनामुपात्तानां परित्यागो मरणं न त्वात्मनो विनाशः । तस्य कूटस्थनित्यत्वात् । करणानि बुद्ध्यादीनि त्रयोदश । तेषां जन्ममरणकरणानां प्रतिनियमो व्यवस्था सा खल्वियं सर्वशरीरेष्वेकस्मिन् पुरुषे नोपपद्यते तदा खल्वेकस्मिन् पुरुषे जायमाने सर्वे जायेरन् म्रियमाणे च म्रियेरन् अन्धादौ चैकस्मिन्सर्व एव अन्धादयो विचित्ते चैकस्मिन्सर्व एव विचित्ताः स्युरित्यव्यवस्था स्यात् । प्रतिक्षेत्रं तु पुरुषभेदे भवति

यासंबन्धाद्धिशेष्ये समारोपितं रूपान्तरं पुरुषैकत्वे देहाद्यभिसम्बन्धपरित्यागकरणविधुरत्वादीनां मध्ये एककरणस्यैव विद्यमानत्वात् । साङ्कर्य्यमपरिहार्य्यं स्यादित्याह । तदेति । प्रतिक्षेत्रं जन्मादिव्यवस्था पुरुषभेदनिबन्धनाव्यवस्थत्वात् संप्रतिपन्नव्यवस्थावदित्यनुमानात् । व्यवस्थाशि द्वौ अनुमानं सिद्धसाधन अर्थापत्तेरपि पारमार्थिकभेदव्यतिरेकेणोपाधिभेदस्या

व्यवस्था। न चैकस्यापि पुरुषस्य देहो-
पाधानभेदाद् व्यवस्थेति युक्तं। पाणि-
स्तनाद्युपाधिभेदेनापि जन्ममरणादिव्य-
वस्थाप्रसङ्गात्। न हि पाणौ वृक्णे जाते
वा स्तनादौ महत्यवयवे युवतिर्जाता
मृता वा भवतीति। इतश्च प्रतिक्षेत्रं
पुरुषभेद इत्याह। अयुगपत्प्रवृत्तेश्च।
प्रवृत्तिः प्रयत्नलक्षणा यद्यप्यन्तःकरण-

प्युपपत्तिरित्याशङ्क्याह। न चेति। किमिति न यु-
क्तमित्याशङ्क्यातिप्रसङ्गः स्यादित्याह। पाणीति। उ-
पधानमुपाधिः तथास्त्वित्यपि न वाच्यमित्याह। न
हीति। वृक्णे छिन्ने। तस्मादतिप्रसङ्गदोषाक्रान्तत्वे-
नौपाधिकभेदस्याघटमानत्वात् अनुमानार्थापत्त्योः
सिद्धसाधनान्यथोपपत्तिलक्षणदोषाभावात् पारमार्थिक
एव भेद इत्युक्तं। पुनश्च भेदे हेत्वन्तरमवतारयति।
इतश्चेति। विमता अयुगपत्प्रवृत्तिः पुरुषभेदनिबन्ध-
ना अयुगपत्प्रवृत्तित्वात् संप्रतिपन्नवदिति। अथ वा
विमतः पुरुषः प्रतिक्षेत्रमन्योभवितुमर्हति अयुगप-
त्प्रवर्तमानत्वात् संप्रतिपन्नवदित्युक्तं। व्यधिकरण-
त्वादसिद्धो हेतुरित्याशङ्क्य हेतुं समानाधिकरणीकरो-
ति। प्रवृत्तेश्चेति। अन्तःकरणसम्बन्धादुपचर्यते इति
यावत्॥ १८॥

वर्त्तिनी तथापि पुरुषे उपचर्यते । तथा च तस्मिन्नेकत्रशरीरे प्रयतमाने स एव सर्वशरीरेष्वेक इति सर्वत्र प्रयतेत ततश्च सर्वाण्येव शरीराणि युगपच्चालयेत्। नानात्वे तु नायं दोष इति । इतश्च पुरुषभेद इत्याह । त्रैगुण्यविपर्ययाच्चैव । एवकारो भिन्नक्रमः सिद्धमित्यस्यानन्तरं द्रष्टव्यः सिद्धमेव नासिद्धं । त्रयो गुणास्त्रैगुण्यं तस्य विपर्ययो ऽन्यथात्वं केचित्खलु सत्वनिकायाः सत्वबहुलाः यथोर्ध्वस्रोतसः । केचिद्रजो बहुलाः यथा मनुष्याः । केचित्तमोबहुलाः यथा तिर्यग्योनयः । सोयमीदृशस्त्रैगुण्यविपर्ययो ऽन्यथाभावस्तेषु सत्वनिकायेषु न भवेत् । यद्येकः पुरुषः स्यात् । भेदे त्वयं न दोष इति ॥ १८ ॥

एवं पुरुषबहुत्वं प्रसाध्य विवेकज्ञानोपयोगितया तस्य धर्मानाह ।

तस्माच्च विपर्यासात्सिद्धं साक्षित्व

मस्य पुरुषस्य । कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥ १९ ॥

तस्माच्चेति चशब्दः पुरुषस्य बहुत्वेन सह बहुधर्मान्तराणि समुच्चिनोति विपर्यासादस्मादित्युक्ते त्रैगुण्यविपर्ययादित्यनन्तरोक्तं संबध्येत । अतस्तन्निरासाय तस्मादित्युक्तमनन्तरोक्तं हि सन्निधानादिदमो विषयो विप्रकृष्टं च तद इति । विप्रकृष्टं त्रिगुणमविवेक्यादि संबध्यते । तस्मात्त्रिगुणादेर्यो विपर्यासः स पुरुषस्यात्रिगुणत्वं विवेकित्वमविषयत्वमसाधारणत्वं चेतनत्वमप्रसवधर्मित्वञ्च । तत्र चेतनत्वेनाविषयत्वेन च साक्षित्वद्रष्टृत्वे दर्शिते । चेतनो हि द्रष्टा भवति । नाचेतनः । साक्षी च द

तस्मादित्यन्तेनानन्तरमुक्तस्य निरन्तरः कथमित्याह । अनन्तरोक्तं हीति । तदुक्तं । इदमः प्रत्यक्षगतं समीपवर्त्ति चैतदो रूपं । अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयादिति ॥ १९ ॥

र्शितविषयो भवति । यस्मै प्रदर्श्यते विषयः स साक्षी । तथा हि लोके अर्थिप्रत्यर्थिनौ विवादविषयं साक्षिणे दर्शयतः । एवं प्रकृतिरपि स्वचरितं विषयं पुरुषाय दर्शयतीति पुरुषः साक्षी । न चाचेतनो विषयो वा शक्यो विषयं दर्शयितुमिति चैतन्यादविषयत्वाच्च भवति साक्षी । अत एव द्रष्टापि भवति । अत्रैगुण्याच्चास्य कैवल्यं । आत्यन्तिको दुःखत्रयाभावः कैवल्यं । तच्च तस्य स्वाभाविकादत्रैगुण्यात् सुखदुःखमोहरहितत्वात्सिद्धं । अत एवात्रैगुण्यान्माध्यस्थ्यं सुखी हि सुखेन तृप्यन् दुःखी हि दुःखं द्विषन् मध्यस्थो न भवति । तदुभयरहितस्तु मध्यस्थ इत्युदासीन इति चाख्यायते विवेकित्वादप्रसवधर्मित्वाच्चाकर्तेति सिद्धं ॥ १९ ॥

स्य।देतत्। प्रमाणेन कर्त्तव्यमर्थमव
गम्य चेतनोऽहं चिकीर्षन् करोमीति कृ
तिचैतन्ययोः सामानाधिकरण्यमनुभव
सिद्धं तदेतस्मिन्मते नावकल्पते चेतनस्या
कर्तृत्वात्। कर्तुश्चाचैतन्यादित्यत आह।
तस्मात्तत्संयोगादचेतनं चेतनावदिव
लिङ्गम्। गुणकर्तृत्वे च तथा कर्तेव
भवत्युदासीनः॥ २०॥

तस्मादिति। यतश्चैतन्यकर्तृत्वे
भिन्नाधिकरणे युक्तितः सिद्धे तस्माद्
भ्रान्तिरियमित्यर्थः। लिङ्गं महदादिसू
क्ष्मपर्यन्तं वक्ष्यति। भ्रान्तिबीजं तत्संयो
गस्तत्सन्निधानमतिरोहितार्थमन्यत् २०

तत्संयोगादित्युक्तं न च भिन्नयोः
संयोगापेक्षां विना न चेयमुपकार्यौप
कारकभावं विनेत्यपेक्षाहेतुमुपकारमाह।
पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा
प्रधानस्य। पङ्ग्वन्धवदुभयोरपि संयो

अतिरोहितं। गतार्थम्॥ २१॥

गस्तत्कृतः सर्गः ॥ २१ ॥

पुरुषस्येत्यादि । प्रधानस्येति कर्मणि षष्ठी । प्रधानस्य सर्वकारणस्य यद्दर्शनं पुरुषेण तदर्थं तदनेन भोग्यता प्रधानस्य दर्शिता । ततश्च भोग्यं प्रधानं भोक्तारमन्तरेण न सम्भवतीति युक्तास्य भोक्त्रपेक्षा । पुरुषस्यापेक्षां दर्शयति । पुरुषस्य कैवल्यार्थं तथा भोग्येन हि प्रधानेन सम्भिन्नः पुरुषस्तद्गतं दुःखत्रयं स्वात्मन्यभिमन्यमानः कैवल्यं प्रार्थयते। तच्च सत्त्वपुरुषान्यताख्यातिनिबन्धनं।न च सत्त्वपुरुषान्यताख्यातिः प्रधानमन्तरेणेति कैवल्यार्थं पुरुषः प्रधानमपेक्षते। अनादित्वाच्च संयोगपरंपराया भोगाय संयुक्तोपि कैवल्याय पुनः संयुज्यते इति युक्तं । ननु भवत्वनयोः संयोगो महदा

संभिन्नः । संयुक्तः । ननु भोगार्थं संयुक्तत्वात्पुरुषस्य कैवल्यार्थं संयोगो न सम्भवतीत्याशङ्क्याह । अनादित्वाच्चेति ॥ २१ ॥ २२ ॥

दिसर्गस्तु कुत इत्यत आह । तत्कृतः सर्गः । संयोगो हि न महदादिसर्गमन्तरेण भोगाय कैवल्याय च पर्याप्त इति संयोग एव भोगापवर्गार्थं सर्गं करोतीत्यर्थः ॥ २१ ॥

सर्गक्रममाह ।

प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः । तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥ २२ ॥

प्रकृतेरिति । प्रकृतिरव्यक्तं महदहङ्कारौ वक्ष्यमाणलक्षणौ एकादशेन्द्रियाणि वक्ष्यमाणानि तन्मात्राणि च पञ्च सोऽयं षोडशसंख्यापरिमितो गणः षोडशकस्तस्मादपि षोडशकादपकृष्टेभ्यः पञ्चभ्यः तन्मात्रेभ्यः पञ्च भूतानि आकाशादीनि । तत्र शब्दतन्मात्रादाकाशं शब्दगुणं । शब्दतन्मात्रसहितात् स्पर्शतन्मात्राद्वायुः शब्दस्पर्शगुणः । शब्दस्पर्शतन्मात्रसहि

ताद्रूपतन्मात्रात्तेजः शब्दस्पर्शरूपगुणं । शब्दस्पर्शरूपतन्मात्रसहिताद्रसतन्मात्रादापः शब्दस्पर्शरूपरसगुणाः । शब्दस्पर्शरूपरसतन्मात्रसहिताद्गन्धतन्मात्राच्छब्दस्पर्शरूपरसगन्धगुणा पृथिवी जायत इत्यर्थः ॥ २२ ॥

अव्यक्तं सामान्यतो लक्षितं तद्विपरीतमव्यक्तं इत्यनेन विशेषतश्च सत्त्वं लघु प्रकाशकमित्यादिना व्यक्तमपि सामान्यतो लक्षितं हेतुमदित्यादिना सम्प्रति विवेकज्ञानोपयोगितया व्यक्तविशेषं बुद्धिं लक्षयति ।

अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम् । सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम् ॥ २३ ॥

अध्यवसाय इति । अध्यवसायो बुद्धिः क्रियाक्रियावतोरभेदविवक्षया । सर्वो व्यवहर्ता आलोच्य मत्वाहमत्राधिकृत इत्यभिमत्य कर्त

व्यसंतन्मयंरध्यवसायात्। ततश्च मत्र कर्त्तव्यमिति लोकसिद्धम्। तत्र योऽयं कर्त्तव्यमिति विनिश्चयश्चितिसन्निधानादापन्नचैतन्याया: बुद्धे: सोऽध्यवसायो बुद्धेरसाधारणो व्यापारस्तदभेदाद्बुद्धि:।

स च बुद्धेर्लक्षणं समानासमानजातीयव्यवच्छेदकत्वात्। तदेवं बुद्धिं लक्षयित्वा विवेकज्ञानोपयोगिनस्तस्या: धर्मान्सात्विकराजसतामसानाह। धर्मो ज्ञानं विराग ऐश्वर्यं सात्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम्। धर्मोऽभ्युदयनि:श्रेयसहेतु:। तत्र यागदानाद्यनुष्ठानजनितो धर्मोऽभ्युदयहेतु:। अष्टाङ्गयोगानुष्ठानजनितश्च नि:श्रेयसहेतु:। गुणपुरुषान्यताख्यातिर्ज्ञानं। विरागो वैराग्यं रागाभाव:। तस्य यतमानसंज्ञा व्यतिरेकसंज्ञा एकेन्द्रियसंज्ञा वशीकार

. कैवल्ये हेतुर्वैराग्यं तस्य चतस्त्रः संज्ञा आह। यतमानसंज्ञेत्यादिना।

सञ्ज्ञेति चतस्रः संज्ञाः । रागादयः कषायाश्चित्तवर्त्तिनस्तैरिन्द्रियाणि यथा स्वं विषयेषु प्रवर्त्यन्ते । तन्मा प्रवर्त्ति षित विषयेषु इन्द्रियाणीति तत्परिपा चनायारम्भः प्रयत्नो यतमानसंज्ञा । परिपाचने चानुष्ठीयमाने केचित् कषा याः पक्काः पक्ष्यन्ते च केचित्तत्रैवं पूर्वा परीभावे सति पक्ष्यमाणेभ्यः कषायेभ्यः पक्कानां व्यतिरेकेणावधारणं व्यतिरेक संज्ञा । इन्द्रियप्रवृत्त्यसमर्थतया पक्का नामौत्सुक्यमात्रेण मनसि व्यवस्थान मेकेन्द्रियसंज्ञा । औत्सुक्यमात्रस्यापि निवृत्तिरूपस्थितेष्वपि दृष्टानुश्रविकवि षयेषु या संज्ञात्रयात्पराचीना सा वशी कारसंज्ञा । यामत्र भगवान् पतञ्जलि र्वर्णयां चकार । दृष्टानुश्रविकविषयवि तृष्णस्य वशीकारसंज्ञा वैराग्यमिति । सोयं बुद्धिधर्मो विराग इति । ऐश्वर्य मपि बुद्धिधर्मो यतो ऽणिमादिप्रादुर्भा

वः। अत्राणिमा भवत्यणुर्यतः शिलामपि प्रविशति। लघिमा लघुभावः। यतः सूर्यमरीचीनालम्ब्य सूर्यलोकं याति। गरिमा गुरुर्भवति। महिमा यतो महान्भवति। प्राप्तिरङ्गुल्यग्रेण स्पृशति चन्द्रमसं। प्राकाम्यमिच्छानभिघातो यतो भूमावुन्मज्जति निमज्जति च यथोदके। वशित्वं भूतभौतिकं वशीभवत्यवश्यम्। ईशित्वं भूतभौतिकानां प्रभवव्यूहव्ययानामीष्टे। यत्र कामावसायित्वं सत्यसङ्कल्पता। यथास्य सङ्कल्पो भवति भूतेषु तथैव भूतानि भवन्ति। अन्येषां मनुष्याणां निश्चया निश्चेतव्यमनुविधीयन्ते योगिनस्तु निश्चेतव्याः पदार्थाः निश्चयमिति चत्वारः सात्त्विका बुद्धिधर्माः। तामसास्तु तद्विपरीता बुद्धिधर्माः। अधर्माज्ञाना

भूतभौतिकानामिति। यः कश्चिदवशो भूतभौतिकानां सोऽस्य वशीभवतीत्यर्थः॥ २३॥

वैराग्यानैश्वर्य्याभिधानाश्चत्वार इत्यर्थः ॥ २३ ॥

अहङ्कारस्य लक्षणमाह ।

अभिमानोऽहङ्कारस्तस्माद्द्विविधः प्रवर्त्तते सर्गः । एकादशकश्च गणस्तन्मात्रपञ्चकश्चैव ॥ २४ ॥

अभिमानइति । अभिमानोऽहङ्कारः । यत्खल्वालोचितं मतञ्च तत्राहमधिकृतः शक्तः खल्वहमत्र मदर्था एवामी विषया मत्तो नान्योऽत्राधिकृतः कश्चिदस्ति अतोऽहमस्मीति योऽभिमानः सोऽसाधारणव्यापारत्वाद् अहंकारः तमुपजीव्य हि बुद्धिरध्यवस्यति कर्त्तव्यमेतन्मयेति निश्चयं करोति । तस्य कार्य्यभेदमाह । तस्माद्द्विविधः प्रवर्त्तते सर्गः । प्रकारद्वयमाह । एकादशकश्च गणः इन्द्रियाह्वयस्तन्मात्रपञ्चकश्चैव ।

ननु बुद्धिरेव केवला मनःसहिताऽन्तःकरणमस्तु कृतमहङ्कारेणेति चेत्तत्राह । तमुपजीव्येति २४

द्विविध एव सर्गोऽहङ्कारात्। न त्वन्य इति एवेत्यनेनावधारयति ॥२४॥

स्यादेतत्। अहङ्कारादेकरूपात् कारणात्कथं जडप्रकाशकौ गणौ विलक्षणौ भवत इत्यत आह।

सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात्। भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥ २५ ॥

सात्त्विक इति। प्रकाशलाघवाभ्यामेकादशक इन्द्रियगणः सात्त्विको वैकृतात्सात्त्विकादहङ्कारात्प्रवर्त्तते। भूतादेस्त्वहङ्कारात् तामसात्तन्मात्रागणः प्रवर्त्तते। कस्माद्यतः स तामसः। एतदुक्तं भवति। यद्यप्येकोऽहङ्कारस्तथापि गुणभेदोद्भवाभिभवाभ्यां भिन्नं कार्य्यं करोतीति। ननु यदि सत्वतमोभ्यामेव सर्वं कार्य्यं जन्यते तदा कृतमकिञ्चि

इन्द्रियस्य लक्षणमाह ॥ सात्त्विकेति ॥ २५ ॥

स्करेण रजसेत्यत आह । तैजसादुभयं तैजसाद्राजसादुभयं गणद्वयं भवति । यद्यपि रजसो न कार्यान्तरमस्ति तथापि सत्वतमसी स्वधर्मक्रिये समर्थेऽपि न स्वकार्यं कुरुतः रजस्तु चलतया ते यदा चालयति तदा स्वकार्यं कुरुतइति । तदुभयस्मिन्नपि कार्ये सत्वतमसोः क्रियोत्पादनद्वारेणास्ति रजसः कारणत्वमिति न व्यर्थं रज इति॥२५

सात्विकमेकादशकमाख्यातुं वाह्येन्द्रियदशकं तावदाह ।

बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि । वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाण्याहुः ॥ २६ ॥

बुद्धीन्द्रियाणीति । सात्विकाहङ्कारोपादानत्वमिन्द्रियत्वं । तच्च द्विविधम्॥

लक्षणं लक्षणाविभागं चोक्त्वा इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति चेति पाणिनिस्मरणानुसारेण व्युत्पत्तिमाह । उभयमप्येतदिति ।

बुद्धीन्द्रियं कर्मेन्द्रियञ्च उभयमप्येतदि न्द्रस्यात्मनश्चिन्हत्वादिन्द्रियमुच्यते। तानि च स्वसंज्ञाभिश्चक्षुरादिभिरुक्तानि। तत्र रूपग्रहणलिङ्गं चक्षुः। शब्दग्रहण लिङ्गं श्रोत्रं। गन्धग्रहणलिङ्गं घ्राणं। रसग्रहणलिङ्गं रसनं। स्पर्शग्रहणलिङ्गं त्वक्। इति ज्ञानेन्द्रियाणां संज्ञा एवं वागादीनां कार्यं वक्ष्यति॥ २६॥

एकादशकमिन्द्रियमाह।

उभयात्मकमत्रमनः सङ्कल्पकमिन्द्रियं च साधर्म्यात्। गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च॥ २७॥

उभयात्मकमित्यादि। एकादशस्विन्द्रियेषु मध्ये मन उभयात्मकं बुद्धीन्द्रियं कर्मेन्द्रियञ्च चक्षुरादीनां वागादीनाञ्च मनोधिष्ठितानामेव स्वस्वविषयेषु

रूपग्रहणं कारणपूर्वकं कार्यत्वात्संप्रतिपन्नवदिति। परिशेषाच्चक्षुः सिध्यति। चक्षुरिन्द्रियसद्भावे प्रमाणमाह। तत्रेति। एवं श्रोत्रादिष्वपीति॥ २६॥

प्रवृत्तेः । तदसाधारणेन रूपेण लक्षय
ति । सङ्कल्पकमत्रमनः । सङ्कल्पेन
रूपेण मनो लक्ष्यते । आलोचितमि
न्द्रियेण वस्त्विदमिति सम्मुग्धमिदमे
वं नैवमिति सम्यक् कल्पयति । निय
स्य दर्शयति । विशेषणविशेष्यभावेन
विवेचयतीति यावत् । यदाहुः । स
म्मुग्धं वस्तुमात्रं तु प्राग्गृह्णात्यविक
ल्पितं । तत्सामान्यविशेषाभ्यां कल्पय
न्ति मनीषिण इति । तथा हि । अ
स्ति ह्यालोचनं ज्ञानं प्रथमं निर्विक
ल्पकम् । बालमूकादिविज्ञानसदृशं मु
ग्धवस्तुजमिति । ततः परं पुनर्वस्तुध
र्मैर्जात्यादिभिर्यया बुद्ध्या ऽवसीय
ते सापि प्रत्यक्षत्वेन सम्मता । सोयं
सङ्कल्पलक्षणो व्यापारो मनसः समा
नासमानजातीयाभ्यां व्यवच्छिन्दन् म
नो लक्षयति । स्यादेतत् । असाधारण
व्यापारयोगिनौ यथा महदहङ्कारौ न

न्द्रियं एवं मनोप्यसाधारणव्यापारयो गि नेन्द्रियं भवितुमर्हतीत्यत आह । इन्द्रियञ्च कुतः साधर्म्यात् । इन्द्रियान्तरैः सात्विकाहङ्कारोपादानत्वञ्च साधर्म्यं । नत्विन्द्रलिङ्गत्वं । महत्वादीनामप्यात्मलिङ्गत्वेनेन्द्रियत्वप्रसङ्गात्। तस्माद्व्युत्पत्तिमात्रमिन्द्रलिङ्गत्वं न तु प्रवृत्तिनिमित्तं । अथ कथं सात्विकाहङ्कारादेकस्मादेकादशेन्द्रियाणीत्यत आह। गुणपरिणामविशेषात् नानात्वं बाह्यभेदाश्च शब्दाद्युपभोगसंप्रवर्त्तकादृष्टसहकारिभेदात्कार्यभेदाः । अदृष्टभेदोपि गुणपरिणाम एव बाह्यभेदाश्चेति प्रवर्तकदृष्टान्तार्थं यथा बाह्यभेदास्तथैतदपीत्यर्थः ॥ २७ ॥

तदेवमेकादशेन्द्रियाणि स्वरूपत उक्त्वा दशानामप्यसाधारणीर्वृत्तीराह ।

बाह्यभेदाः । पृथिव्यादयः ॥ २७ ॥ २८ ॥

शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः । वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् ॥ २८ ॥

बुद्धीन्द्रियाणां सम्मुखवस्तुदर्शनमालोचनमुक्तम् । वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानां कर्मेन्द्रियाणां कण्ठताल्वादिस्थानमिन्द्रियं वाक् तस्या वृत्तिर्वचनं ज्ञानेन्द्रियाणां वृत्तीः स्पष्टाः ॥ २८ ॥

अन्तःकरणत्रयस्य वृत्तिमाह ।

स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या । सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ २९ ॥

स्वालक्षण्यमिति । स्वालक्षण्यं वृत्तिस्त्रयस्य स्वमसाधारणं लक्षणं येषां तानि स्वलक्षणानि महदहङ्कारमनांसि तेषां भावः स्वालक्षण्यं तच्च स्वानि लक्षणान्येव । तद्यथा ॥ महतोऽध्यवसायोऽहङ्कारस्याभिमानः सङ्कल्पो मनसो वृत्तिर्व्यापारः ।

वृत्तिद्वैविध्यं साधारणासाधारणत्वाभ्यामाह । सैषा भवत्यसामान्या ऽसाधारणी । सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च । सामान्या चासौ करणवृत्तिश्चेति त्रयाणामपि करणानां पञ्च वायवो जीवनं वृत्तिः तद्भावे भावात् तदभावे चाभावात् । तत्र प्राणो नासाग्रहृन्नाभिपादाङ्गुष्ठवृत्तिः । अपानः कृकाटिकापृष्ठपादपायूपस्थपार्श्ववृत्तिः । समानो हृन्नाभिसर्वसन्धिवृत्तिः । उदानो हृत्कण्ठतालुमूर्धभ्रूमध्यवृत्तिः । व्यानस्त्वग्वृत्तिरिति पञ्च वायवः ॥ २९ ॥

चतुर्विकधरणस्य स्वरूपासाधारणीषु वृत्तिषु क्रमाक्रमौ सप्रकारावाह ।

युगपच्चतुष्टयस्य वृत्तिः क्रमशश्च तस्य निर्दिष्टा । दृष्टे तथाप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः ॥ ३० ॥

उक्तार्थे ऽन्वयव्यतिरेकौ प्रतिपादयति । तद्भावइति ॥ २९ ॥

युगपच्चेति । दृष्टे यथा यदा सन्तमसान्धकारे विद्युत्सम्पातमात्राद्व्याघ्रमभिमुखमतिसंनिहितं पश्यति तदा खल्वस्य आलोचनसङ्कल्पाभिमानाऽध्यवसायाः युगपदेव प्रादुर्भवन्ति । यतस्तत उत्प्लुत्य तत्स्थानादेकपदे अपसरति । क्रमशश्च यदा मन्दालोके प्रथमं तावद्वस्तुमात्रं सम्मुग्धमालोचयति । अथ प्रणिहितमनाः कर्णान्ताकृष्टसशरसिञ्जिनीमण्डलीकृतकोदण्डः प्रचण्डतरः पाटच्चरोऽयमिति निश्चिनोति । अथ च मां प्रत्येतीत्यभिमन्यते । अथाध्यवस्यति अपसरामीतः स्थानादिति । परोक्षे तु अन्तःकरणत्रयस्य बाह्येन्द्रियवर्जं वृत्तिरित्याह । अदृष्टे त्रयस्य तत्पूर्विका वृत्तिः अन्तःकरणत्रयस्य युगपत् क्रमेण वृत्तिर्दृष्टपूर्विकेति । अनुमानागमस्मृतयो

कर्णान्तमाकृष्टं सशरं शिञ्जितमव्यक्तशब्दितं मण्डलीकृतं कोदण्डं येन स तथा । पाटच्चरं इति । चौर इत्यर्थः ॥ ३० ॥

हि परोक्षेऽर्थे दर्शनपूर्वाः प्रवर्त्तन्ते नान्यथा । यथा दृष्टे तथाऽदृष्टेपीति योजना ॥ ३० ॥

स्यादेतत् । चतुर्णां त्रयाणां वा वृत्तयो न तावन्मात्राधीनाः तेषां सदातनत्वेन वृत्तीनां सदोत्पादप्रसङ्गात् । आकस्मिकत्वे तु वृत्तिसङ्करप्रसङ्गः नियमहेतोरभावाद् इत्यत आह ।

स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम् । पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणम् ॥ ३१ ॥

स्वामिति । करणानीति शेषः । तथा हि बहवः पुषाः शाक्तीकयाष्टीकधानुष्ककार्पाणिकाः कृतसङ्केताः परावस्कन्दाय प्रवृत्ताः । तत्रान्यतमस्याकूतमवगम्य अन्यतमः प्रवर्त्तते । प्रवर्त्तमानस्तु शाक्तीकः शक्तिमेवादत्ते न तु यष्ट्यादिकमेवं याष्टीकोपि यष्टिमेव न शक्त्यादिकं । तथा

अवस्कन्दाय । शमनाय । आकूतमभिप्रायः । ननु

न्यतमस्य करणस्याकूतात् स्वकार्यकार णाभिमुख्यादन्यतमं करणं प्रवर्त्तते । तत्प्रवृत्तेश्च हेतुमत्वान्न वृत्तिसङ्करप्रसङ्ग इत्युक्तं । स्वां स्वां प्रतिपद्यन्ते इति । स्यादेतत् । याष्टीकादयश्चेतनत्वात्परस्प राकूतमवगम्य प्रवर्त्तन्ते इति युक्तं । करणानि त्वचेतनानि तस्मान्नैवं प्रव र्त्तितुमुत्सहन्ते । तेनैषामधिष्ठात्रा कर णानां स्वरूपसामर्थ्योपयोगाभिज्ञेन भ वितव्यमित्यत आह । पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणमिति । भोगापवर्गलक्षणः पुरुषार्थ एवानागता वस्थः प्रवर्त्तयति करणानि कृतमत्र तत्स्वरूपाभिज्ञेन कर्त्रा । एतच्च वत्सवि वृद्धिनिमित्तमित्यत्र उपपादयिष्यते ३१

न केनचित्कार्यते करणमित्युक्तं तत्र करणं विभजते ।

तथाप्यचेतनं चेतनानधिष्ठितं प्रवर्ततद्वत्यत्र दृष्टान्तो नास्तीत्याशङ्क्याह । एतच्चेति ॥ ३१ ॥ ३२ ॥

करणं त्रयोदशविधं तदाहरणधारण
प्रकाशकरं। कार्यं च तस्य दशधा
हार्यं धार्यं प्रकाश्यञ्च ॥ ३२ ॥

करणं त्रयोदशविधमित्यादि ।
करणं त्रयोदशविधं इन्द्रियाण्येका
दश बुद्धिरहङ्कारश्चेति त्रयोदशप्र
कारं करणं। कारकविशेषः करणं।
न च व्यापारावेशं विना कारकत्वमिति
व्यापारावेशमाह। तदिति। तदाहरण
धारणप्रकाशकरं। यथायथं तत्र कर्मे
न्द्रियाणि वागादीन्याहरन्ति। यथा
स्वमुपाददते स्वव्यापारेण व्याप्नुवन्ती
ति यावत् बुद्ध्यहङ्कारमनांसि तु स्ववृत्त्या
प्राणादिलक्षणया धारयन्ति। बुद्धीन्द्रि
याणि प्रकाशयन्ति आहरणधारणादि
क्रियाणां सकर्मकतया किं कर्म कतिविधं
चेत्यत आह। कार्यञ्च तस्येति। तस्य
त्रयोदशविधस्य करणस्य दशधा आहार्यं
धार्यं प्रकाश्यं च। आहार्यं व्याप्यं कर्म

न्द्रियाणां वचनादानविहरणोत्सर्गानन्दाः यथायथं व्याप्यास्ते च यथायथं दिव्या दिव्यतया दश इत्याहार्यं दशधा। एवं धार्य्यमप्यन्तःकरणत्रयस्य प्राणादिलक्षण या वृत्त्या शरीरं तच्च पार्थिवादिपाञ्च भौतिकं शब्दादीनां पञ्चानां समूहः पृथिवी । ते च पञ्च दिव्यादिव्यतया दशेति धार्यमपि दशधा । एवं बुद्धी न्द्रियाणां शब्दस्पर्शरूपरसगन्धा यथा यथं व्याप्याः ते च यथायथं दिव्यादि व्यतया दशेति प्रकाश्यमपि दशधेति ३२

त्रयोदशविधकरणे ऽवान्तरविभा गङ्करोति ।

अन्तःकरणं त्रिविधं दशधा बाह्यं त्र यस्य विषयाख्यम् । सांप्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥ ३३ ॥

अन्तःकरणमित्यादि । अन्तः क रणं त्रिविधं बुद्धिरहङ्कारो मन इति शरीराभ्यन्तरवर्तित्वादन्तःकरणं दशधा

बाह्यमिन्द्रियं त्रयस्यान्तःकरणस्य विषयाख्यं विषयमाख्याति विषयसङ्कल्पाभिमानाध्यवसायेषु कर्तव्येषु द्वारीभवति। तत्र बुद्धीन्द्रियाणि आलोचनेन कर्मेन्द्रियाणि तु यथास्वं व्यापारेण बाह्यान्तरयोः करणयोः विशेषान्तरमाह। साम्प्रतकालं वर्तमानकालं बाह्यमिन्द्रियं वर्त्तमानसमीपमनागतमतीतमपिवर्त्तमानं अतो वागपि वर्तमानकालविषया भवति। त्रिकालमाभ्यन्तरं करणम्। तद्यथा नदीपूरभेदादभूद्वृष्टिः। अस्तिधूमादग्निरिह नगनिकुञ्जे। असत्युपघातके विरोधिकीटके च पिपीलिकाण्डसञ्चरणाद्भविष्यति वृष्टिरिति तदनुरूपाश्च स

विषयनिश्चयो विषयसङ्कल्पो मनोव्यापारत्वात्। ननु युधिष्ठिरोभूत् कल्कीभविष्यतीत्यादिना बोधाद्वाचः सांप्रतकालमात्रत्वं नास्तीत्याशङ्क्याह। वर्त्तमानेति। अतीतानागतयोर्वर्तमानकालान्तः पातित्वादित्यर्थः। सोपाधिकमतीतादिव्यवहारं दर्शयति। तद्यथेति। भवत्वेवं प्रकृतेऽन्तः करणस्य त्रिका-

ङ्कुरूपाभिमानाध्यवसाया भवन्ति । का लश्च वैशेषिकाभिमत एको नानागता दिव्यवहारभेदं प्रवर्तयितुमर्हतीति । त स्मादयं यैरुपाधिभेदैरनागतादिभेदं प्र तिपद्यते सन्तु त एवोपाधयो ऽनागता दिव्यवहारहेतवः । कृतमत्रान्तर्गडुना कालेनेति सांख्याचार्यास्तस्मान्न काल रूपतत्त्वान्तराभ्युपगम इति ॥ ३३ ॥

साम्प्रतकालानां बाह्येन्द्रियाणां वि षयं विवेचयति ।

तत्त्वे किमायातमित्यत आह । तदनुरूपाश्चेति । ननु सांप्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणमित्युक्तं कालः परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययलिङ्गम् । इत्येवं लक्षणलक्षितस्य वैशेषिकाभिमतस्य कालरूपस्योररीकृतत्वात् । पञ्चविंशतितत्त्वातिरेकः प्राप्नोतीति चेत्तत्राह । कालश्चेति । यस्मात्कारणात् अभिमतः कालो ऽतीतादिभेदनिष्पादको न स्याद् एकत्वात् । तस्मादित्युपसंहारः । अयमिति । प्रमाता । उपाधिभेदैरिति । नदीपूरभेदादिभिरिति यावत् । यस्मात्कारणात् न अभिमतं कालकल्पनं तस्मान्न पञ्चविंशतितत्त्वातिरेक इत्युपसंहरति । तस्मादिति ॥ ३३ ॥

बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि । वाग्भवति शब्दविषया शेषाणि तु पञ्च विषयाणि ३४॥

बुद्धीन्द्रियाणीति । बुद्धीन्द्रियाणि तेषां दशानां इन्द्रियाणां मध्ये पञ्च विशेषाविशेषविषयाणि । विशेषाः स्थूलाः शब्दादयः शान्तघोरमूढाः पृथिव्यादिरूपाः । अविशेषास्तन्मात्राणि सूक्ष्माः शब्दादयः मात्रग्रहणेन भूतभावमपाकरोति । विशेषाश्च अविशेषाश्च विशेषाविशेषाः तएव विषयाः येषां बुद्धीन्द्रियाणां तानि तथोक्तानि । तत्रोर्द्ध्वस्रोतसां योगिनां च श्रोत्रं शब्दतन्मात्रविषयं स्थूलशब्दविषयं चास्मदादीनां तु स्थूलशब्दविषयमेव । एवं तेषां त्वक् स्थूलसूक्ष्मस्पर्शविषया अस्मदादीनां तु स्थूलस्पर्शवि

स्थूलशब्दविषयेति देवानां वागिन्द्रियं पादं पादार्द्धं श्लोकं श्लोकार्द्धं उच्चरति । अस्माकमपि तथैवेति । समानं देवानामस्माकं च वागिन्द्रियमित्यर्थः । शे-

षयैव । एवं चक्षुरादयोपि तेषामस्म दादीनां च रूपादिषु स्थूलसूक्ष्मेषु द्रष्टव्याः । एवं कर्मेन्द्रियेषु मध्ये वागत्र ति शब्दविषया स्थूलशब्दविषया तद्धेतुत्वात् । न तु शब्दतन्मात्रस्य हेतुः । तस्याहङ्कारिकत्वेन वागिन्द्रियेण सहैक कारणत्वात् । शेषाणि तु चत्वारि पायूपस्थपाणिपादाख्यानि पञ्चविषयाणि पाय्याद्याहार्याणां घटादीनां पञ्च शब्दाद्यात्मकत्वादिति ॥ ३४ ॥

सम्प्रतं त्रयोदशसु करणेषु केषांचित्प्रधानभावं सहेतुकमाह ॥

सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात् । तस्मात्त्रिविधं करणं द्वारि द्वाराणि शेषाणि ॥ ३५ ॥

सान्तः करणेत्यादि । द्वारि प्रधानं द्वाराणि शेषाणि करणानि वाह्येन्द्रियाण्यपि चत्वारि कर्मेन्द्रियाणि समानान्युभयेषामित्याह । शेषाणीति । एकवाक्यतां नीता मिलिता इति यावत् ॥ ३४ ॥ ३५ ॥ ३६ ॥

याणि द्वाराणि तैरुपनीतं सर्वं विषयं समनोऽहङ्कारा बुद्धिः यस्माद्विषयमवगाहते ऽध्यवस्यति तस्माद्बाह्येन्द्रियाणि द्वाराणि द्वारवती च सान्तःकरणा बुद्धिरिति ॥ ३५ ॥

न केवलं बाह्यानीन्द्रियाण्यपेक्ष्य प्रधानं बुद्धिरपि तु ये ऽप्यहङ्कारमनसी द्वारिणी ते ऽप्यपेक्ष्य बुद्धिः प्रधानमित्याह ॥

एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः । कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥ ३६ ॥

एते इति । यथा हि ग्रामाध्यक्षाः कौटुम्बिकेभ्यः करमादाय विषयाध्यक्षाय प्रयच्छति विषयाध्यक्षश्च सर्वाध्यक्षाय स च भूपतये । तथा बाह्येन्द्रियाण्यालोच्य मनसे समर्पयन्ति । मनश्च सङ्कल्प्याहङ्काराय ऽहङ्कारश्चाभिमत्य बुद्धौ सर्वाध्यक्षभूतायां तदिदमुक्तं पुरुष

स्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्तीति । बाह्येन्द्रियमनोहङ्काराश्च गुणविशेषाः गुणानां सत्वरजस्तमसां विकाराः ते तु परस्परविरोधशीला अपि पुरुषार्थे न भोगापवर्गरूपेण एकवाक्यतां नीताः । यथा वर्त्तितैलवह्नयः सन्तमसापनयेन रूपप्रकाशाय मिलिताः प्रदीप एवमेते गुणविशेषा इति योजना ॥३६॥

कस्मात्पुनर्बुद्धौ प्रयच्छन्ति न तु बुद्धिरहङ्काराय द्वारिणे मनसे चेत्यत आह ।

सर्वं प्रत्युपभोगं यस्मात्पुरुषस्य साधयति बुद्धिः । सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥ ३७ ॥

सर्वमिति । पुरुषार्थस्य प्रयोजकत्वात् तस्य यत्साक्षात्साधनं तत्प्रधानं बुद्धिश्चास्य साक्षात्साधनं तस्मात्सैव प्रधानं । यथा सर्वाध्यक्षः साक्षाद्राजार्थसाधनतया प्रधानं इतरे तु ग्रामाध्यक्षादयस्तं प्रति गुणभूताः । बुद्धि

र्हि पुरुषसन्निधानात् तच्छायापत्त्या तद्रूपेव सर्वविषयोपभोगं पुरुषस्य साधयति । सुखदुःखानुभवो हि भोगः स च बुद्धौ बुद्धिश्च पुरुषरूपैवेति । सा च पुरुषमुपभोजयति । यथाऽर्थालोचनसङ्कल्पाभिमानाश्च तत्तद्रूपपरिणामेन बुद्धावुपसङ्क्रान्ताः तथा इन्द्रियादिव्यापारा अपि बुद्धेरेव स्वव्यापारेणाध्यवसायेन सहैकव्यापारीभवन्ति । यथा स्वसैन्येन सह ग्रामाध्यक्षादिसैन्यं सर्वाध्यक्षस्य भवति सर्वं शब्दादिकं प्रति

प्रयोजकत्वादिति हेतुत्वादित्येतत् । नन्वचेतनाबुद्धिः कथं पुरुषस्य विषयोपभोगसाधिका इत्यत आह । बुद्धिर्हीति । ननु तथापि सुखाद्यात्मकगुणसंबन्धशून्यत्वात् न पुरुषस्य भोगसंबन्धो भावीति अत आह । सुखेति । बुद्धिगतं सुखाद्यनुभवं तत्संबन्धानुमानात्मन्यभिमन्यते ऽविवेकादित्यर्थः । इन्द्रियादीनां विषयसमर्पणद्वारा बुद्धिं प्रति गुणत्वमाह । अर्थालोचनेति । किं चेन्द्रियव्यापाराणामपि बुद्धिव्यापारसहभावाद्गुणत्वमिन्द्रियादीनामित्याह । इन्द्रियव्यापारा अपीति । उक्तेऽर्थे आर्यां पदशो योः

य उपभोगः पुरुषस्य तं साधयति । ननु पुरुषस्य सर्वविषयोपभोगसम्पादिका यदि बुद्धिस्तर्ह्यनिर्मोक्ष इत्यत आह । पश्चात्प्रधानपुरुषयोरन्तरं विशेषं विशिनष्टि करोति । ननु प्रधानपुरुषयोरन्तरस्य कृतकत्वादनित्यत्वं तत्कृतस्य मोक्षस्याऽनित्वं स्यादित्यत आह । विशिनष्टि प्रधानं सविकारमन्यदहमन्य इति विद्यमानमेवान्तरमविवेकेनाविद्यमानमिव बुद्धिर्बोधयति न तु करोति येनानित्यत्वमित्यर्थः । यथौदनपाकं पचतीति करणं च प्रतिपादनं स्रु

जयति । सर्वमिति । ननु पुरुषस्य सर्वविषयोपभोगसंपादिका यदि बुद्धिस्तर्ह्यनिर्मोक्ष इत्यत्राह । प्रधानेति । विशेषं विशिनष्टि इत्येतत्पुनरुक्तमाशङ्क्य उपसंग्रहणेन पराकरोति । यथेति । ननु प्रधानपुरुषान्तरस्य कृतकत्वादनित्यत्वेनित्यत्वं तत्कृतमोक्षस्येति चेत्तत्राह । करणं चेति । प्रधानं सविकारमन्यदहमन्यइति । विद्यमानमेवान्तरमविवेकेनाविद्यमानमिव बुद्धि बोधयति । ननु तत्करोति येनानित्यत्वमित्य-

नेनापवर्गः पुरुषार्थो दर्शितः। सूक्ष्मं दुर्लक्ष्यन्तदन्तरमित्यर्थः ॥ ३७ ॥

तदेवं करणानि विभज्य विशेषाविशेषान् विभजते।

तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः। एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च ॥ ३८ ॥

तन्मात्राणीति। शब्दादितन्मात्राणि सूक्ष्माणि न चैषां शान्तत्वादिरस्ति उपभोगयोग्यो विशेष इति मात्रशब्दार्थः। अविशेषानुक्त्वा विशेषान्वक्तुमुत्पत्तिमेषामाह। तेभ्यस्तन्मात्रेभ्यो यथासंख्यमेकद्वित्रिचतुष्पञ्चभ्यो भूतानि आकाशानिलानलसलिलावनिरूपाणि पञ्च पञ्चभ्यस्तन्मात्रेभ्यः। अस्त्वेषां भूतानां उत्पत्तिः विशेषत्वे किमायातमित्यत आह। एते स्मृता

र्थः। आर्याया उत्तरार्द्धस्य फलितमर्थमाह। अने-नेति ॥ ३७ ॥ ३८ ॥

विशेषाः कुतः शान्ता घोराश्च मूढाश्च चकार एको हेतौ द्वितीयः समुच्चये । यस्मादाकाशादिषु स्थूलेषु सत्त्वप्रधानतया केचिच्छान्ताः सुखाः प्रकाशा लघवः केचिद्रजःप्रधानतया घोराः दुःखा अनवस्थिताः केचित्तमःप्रधानतया मूढा विषण्णा गुरवः । तेऽमी परस्परव्यावृत्त्याऽनुभूयमाना विशेषा इति च स्थूला इति चोच्यन्ते । तन्मात्राणि तु अस्मदादिभिः परस्परव्यावृत्तानि नानुभूयन्ते इति अविशेषा इति सूक्ष्मा इति चोच्यन्ते ॥ ३८ ॥

विशेषाणामवान्तरविशेषव्यापारमाह ।

सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः । सूक्ष्मास्तेषां नियता मातापितृजा निवर्त्तन्ते ॥ ३९ ॥

सूक्ष्मा इति । त्रिधा विशेषाःस्युस्तान् विशेषप्रकारानाह । सूक्ष्माः सूक्ष्मदेहाः परिकल्पिता मातापितृ

जाः षाट्कौशिकाः । तत्र मातृतो लोमलोहितमांसानि पितृतस्तु स्नाय्वस्थिमज्जान इति षट्कोशाः प्रकृष्टानि महान्ति भूतानि प्रभूतानि तैः सह सूक्ष्मं शरीरं एको विशेषः मातापितृजो द्वितीयः महाभूतानि तृतीयः महाभूतसर्गे च घटादीनां निवेश इति । सूक्ष्ममातापितृजयोर्देहयोर्विशेषमाह । सूक्ष्मास्त्वेषां विशेषाणां मध्ये ये ते नियताः मातापितृजा निवर्तन्ते रसान्ता वा भस्मान्ता वा विडन्ता वेति ॥ ३९ ॥

सूक्ष्मशरीरं विभजते ।

पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम् । संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥ ४० ॥

ननु घटपटादिलक्षणश्चतुर्थो विशेषो वाच्य इत्यत्राह । महाभूतसर्गेचेति । येषां देहो न स्यात् श्वादिभिर्वा न भक्ष्यन्ते ते च ते रसान्ता भूनाम्यन्ता येषां तु दाहस्ते च भस्मान्ता ये तु श्वादिभिर्भक्ष्यन्ते ते श्वादिविष्ठावसाना इत्यर्थः ॥ ३८ ॥

प्रधानेनादिसर्गे प्रतिपुरुषमेकैकमुत्पादितं असक्तमव्याहतं शिलामप्यनुविशति नियतमादिसर्गात् आ च महाप्रलयादवतिष्ठते । महदादिसूक्ष्मपर्यन्तं । महदहङ्कारैकादशेन्द्रियपञ्चतन्मात्रपर्यन्तं एषां समुदायः सूक्ष्मं शरीरं शान्तघोरमूढैरिन्द्रियैरन्वितत्वाद्विशेषः । नन्वस्त्वेतदेव शरीरं भोगायतनं पुरुषस्य कृतं दृश्यमानेन षाट्कौशिकेन शरीरेणेत्यत आह । संसरतीति । उपात्तं उपात्तं षाट्कौशिकं शरीरं जहाति हायं हायं चोपादत्ते कस्मान्निरुपभोगं यतः षाट्कौशिकं शरीरं भोगायतनं विना

ननु तन्मात्राण्यविशेषा इत्युक्तत्वात्कथं सूक्ष्मशरीरविशेष इत्यत आह । शान्तेति । शान्तघोरमूढविशेषाणां व्यावृत्तप्रत्ययावलम्बनं विशेष इत्येव लक्षणाक्रान्तानां प्रकाशकत्वात् । बुद्धीन्द्रियाणां कर्मेन्द्रियाणां च कारकत्वाच्छान्तघोरमूढत्वमिन्द्रियाणामिति शान्तत्वं व्यवहारकत्वात् घोरत्वं भ्रामकत्वात्तत्संबद्धत्वात्सूक्ष्मं शरीरं विशेष इत्यर्थः । हायं हायं चेति ।

सूक्ष्म शरीरं निरुपभोगं यस्मात्तस्मा त्सूक्ष्मं शरीरं संसरति । ननु धर्माधर्म निमित्तः संसारः न च सूक्ष्मशरीरस्या स्ति तद्योगः तत्कथं संसरतीति अत आह । भावैरधिवासितं । धर्माधर्मज्ञाना ज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि भावाः तदन्विता बुद्धिः तदन्वितञ्च सूक्ष्मशरी रमिति तदपि भावैरधिवासितं यथा सुरभिचम्पककुसुमसंपर्काद्वस्त्रं तदामो दवासितं भवति । तस्माद् भावैरेवाधि वासितत्वात्संसरति । कस्मात्पुनः प्रधा नमिव महाप्रलयेपि तच्छरीरं न तिष्ठ तीत्यत आह । लिङ्गमिति । लयं ग च्छतीति लिङ्गं हेतुमत्वेन चास्य लिङ्ग त्वमिति भावः ॥ ४० ॥

हित्वा हित्वा चेत्यर्थः । ननु धर्मादिभावान्वितता बुद्धेरस्तु सूक्ष्मशरीरे ऽहङ्कारैकादशेन्द्रियं पञ्चतन्मा-त्रसमुदायलक्षणे किमायातमित्यत आह । तदन्वितं चेति । भावान्वितं । बुद्ध्यन्वितमित्यर्थः ॥ ४० ॥

स्यादेतत् । बुद्धिरेव साहङ्कारेन्द्रिया कस्मान्न संसरति । कृतं सूक्ष्मशरीरेणा प्रामाणिकेनेत्यत आह ।

चित्रं यथाऽऽश्रयमृते स्थाण्वादिभ्यो विना यथाच्छाया । तद्वद्विना विशेषै र्न तिष्ठति निराश्रयं लिङ्गम् ॥ ४१ ॥

चित्रमिति । लिङ्गनात् ज्ञापनाद् बुद्ध्यादयो लिङ्गम् । तदनाश्रयं न तिष्ठति जन्ममरणान्तराले बुद्ध्यादयः प्रत्युत्पन्नशरीराश्रयाः प्रत्युत्पन्नपञ्च तन्मात्रवत्त्वे सति बुद्ध्यादित्वाद्दृश्यमानशरीरवृत्तिबुद्ध्यादिवत् । विना विशेषैरिति सूक्ष्मैः शरीरै रित्यर्थः । आगमश्चात्र भवति । ततः सत्यवतः कायात्पाशबद्धं वशङ्गतम् । अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद्यम इत्यङ्गुष्ठमात्रत्वेन सूक्ष्मशरीरत्वमुपल

प्रायशो मरणमित्यर्थः । नन्वत्रागमे सूक्ष्मशरीरस्य नामापि न श्रूयत इत्यत्राह । अङ्गुष्ठमात्रमिति । तथा-

क्षयति । आत्मनो निष्कर्षासम्भवात् सूक्ष्ममेव शरीरं पुरुषस्तदपि पुरि स्थूलशरीरे शेते इति ॥ ४१ ॥

एवं सूक्ष्मशरीरास्तित्वमुपपाद्य यथा संसरति येन हेतुना च तदुभयमाह ।

पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन । प्रकृतेर्विभुत्वयोगान्नटवद्व्यवतिष्ठते लिङ्गम् ॥ ४२ ॥

पुरुषार्थेन हेतुना प्रयुक्तं निमित्तं धर्माधर्मादि नैमित्तिकं तेषु तेषु निकायेषु षाट्कौशिकशरीरग्रहः स हि धर्मादिनिमित्तप्रभवः । निमित्तं च नैमित्तिकं च तत्र यः प्रसङ्गः प्रसक्तिस्तया नटवद्व्यवतिष्ठते लिङ्गं सूक्ष्मशरीरम् । यथा हि नटः तां तां भूमिकां विधाय परशुरामो वाऽजातशत्रुर्वा वत्सराजो वा भवति । एवं तत्तत्स्थूलशरीरप

पि पुरुषशब्दस्यात्मनि प्रसिद्धत्वात्सूक्ष्मशरीरं नोच्यत्ते ऽनेन वाक्येनेत्यत्राह । सूक्ष्ममेवेति ॥ ४१ ॥ ४२॥४३॥

रिग्रहणाद्देवो वा मनुष्यो वा पशुर्वा वनस्पतिर्वा भवति सूक्ष्मं शरीरमित्यर्थः । कुतस्त्यः पुनरस्येदृशो महिमेत्यत आह । प्रकृतेर्विभुत्वयोगात् । तथा च पुराणं वैश्वरूप्यात्प्रधानस्य परिणामोयमद्भुत इति ॥ ४२ ॥

निमित्तनैमित्तिके प्रसङ्गेनेत्युक्तं तत्र निमित्तनैमित्तिके विभजते ।

सांसिद्धिकाश्च भावाः प्राकृतिका वैकृतिकाश्च धर्म्माद्याः । दृष्टाः करणाश्रयिणः कार्य्याश्रयिणश्च कललाद्याः ॥४३॥

वैकृतिका नैमित्तिकाः पुरुषस्य जातस्योत्तरकालदेवताराधनादिनोत्पन्नाः। प्राकृतिकाः स्वाभाविका भावाः सांसिद्धिकाः । तथा हि । सर्गादावादिविद्वानत्र भगवान्कपिलो महामुनिर्धर्म्मज्ञानवैराग्यैश्वर्यसम्पन्नः प्रादुर्बभूवेति स्मरन्ति वैकृताश्च भावाः असांसिद्धिका ये उपायानुष्ठानेनोत्पन्नाः यथा प्राचेतसप्रभृ

तीनां महर्षीणां एवमधर्माज्ञानावैराग्या नैश्वर्य्याण्यपि कार्यं शरीरं तदाश्रयिणः तस्यावस्थाः कललबुद्बुदमांसपेशीकरण्डाद्यङ्गप्रत्यङ्गव्यूहाः गर्भस्थस्य। ततो निर्गतस्य बालस्य बाल्यकौमारयौवनवार्द्धकानीति ॥ ४३ ॥

अवगतानि निमित्तनैमित्तिकानि कतमस्य तु निमित्तस्य कतमन्नैमित्तिकमित्यत आह।

धर्म्मेण गमनमूर्द्ध्वं गमनमधस्ताद्भवत्यधर्म्मेण। ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः ॥ ४४ ॥

धर्म्मेण गमनमूर्द्ध्वं द्युप्रभृतिषु लोकेषु गमनमधस्ताद्भवत्यधर्म्मेण सुतलादिषु ज्ञानेन चापवर्गः। तावदेव प्रकृतिर्भोगमारभते न यावद् विवेकख्यातिं करोति। अथ विवेकख्यातौ सत्यां कृतकृत्यतया विवेकख्यातिमन्तं पुरुषं प्रति निवर्तते। यथाहुः। विवेकख्यातिप

र्यन्तं याति प्रकृतिचेष्टितमिति विपर्य्ययादतत्त्वज्ञानादिष्यते बन्धः । स च त्रिविधः । प्राकृतिको वैकृतिको दाक्षिणकश्चेति । तत्र प्रकृतावात्मज्ञानाद्ये प्रकृतिमुपासते तेषां प्राकृतिको बन्धः यः पुराणे प्रकृतिलयान् प्रत्युच्यते । पूर्णं शतसहस्रं हि तिष्ठन्त्यव्यक्तचिन्तका इति । वैकारिको बन्धस्तेषां ये विकारानेव भूतेन्द्रियाहङ्कारबुद्धीः पुरुषधियोपासते तान्प्रतीदमुच्यते । दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः । बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः । ते खल्वमी विदेहा येषां वैकृतिको बन्ध इति । इष्टापूर्तेन दाक्षिणः पुरुषतत्त्वानभिज्ञो हि इष्टापूर्तकारी का

प्रकृतौ लयो येषां ते तथा तान् प्रतीदमिति भूतेन्द्रियाहङ्कारबुद्धिपुरुषबुद्ध्युपासकान् प्रतीत्यर्थः । विदेहा इति । संज्ञान्तरमिदं पारिभाषिकम् ॥ ४४ ॥

मोपहतमना बध्यते इति ॥ ४४ ॥

वैराग्यात्प्रकृतिलयः संसारो भवति राजसाद्रागात् । ऐश्वर्यादविघातो विपर्ययात्तद्विपर्यासः ॥ ४५ ॥

वैराग्यात्प्रकृतिलयः पुरुषतत्त्वानभिज्ञस्य वैराग्यमात्रात्प्रकृतिलयः प्रकृतिग्रहणेन प्रकृतिर्महदहङ्कारभूतेन्द्रियाणि गृह्यन्ते । तेष्वात्मबुद्ध्योपास्यमानेषु लयः । कालान्तरेण च पुनराविर्भवति इति । संसारो भवति राजसाद्रागात् । राजसादित्यनेन रजसो दुःखहेतुत्वात्संसारस्य दुःखहेतुता सूचिता ऐश्वर्यादविघात इति इच्छायाः ईश्वरो हि यदेवेच्छति तदेवकरोति विपर्ययादनैश्वर्याद्विपर्यासः । सर्वत्रेच्छाविघात इत्यर्थः ॥ ४५ ॥

बुद्धिधर्म्मान्धर्मादीनष्टौ भावान्समा

स्पष्टार्थम् ॥ ४५ ॥

समासः संक्षेपः व्यासो विस्तारस्ताभ्यामित्यर्थः ४६॥

सव्यासाभ्यां मुमुक्षूणां हेयोपादेयान् दर्शयितुं प्रथमं तावत्समासमाह ।

एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः । गुणवैषम्यविमर्द्दात्तस्य च भेदास्तु पञ्चाशत् ॥ ४६ ॥

एष इति । प्रतीयतेऽनेनेति प्रत्ययो बुद्धिस्तस्य सर्गस्तत्र विपर्ययोऽज्ञानमविद्या सापि बुद्धिधर्मः अशक्तिरपि करणवैकल्यहेतुका बुद्धिधर्म्म एव तुष्टिसिद्धी अपि वक्ष्यमाणलक्षणे बुद्धिधर्मावेव । तत्र विपर्ययाशक्तितुष्टिषु यथायोगं सप्तानां च धर्मादीनां ज्ञानवर्जमन्तर्भावः । सिद्धौ च ज्ञानस्येति । व्यासमाह । तस्य भेदास्तु पञ्चाशत् । कस्माद् गुणवैषम्यविमर्दाद् गुणानां वैषम्यमेकैकस्याधिकबलता द्वयोर्द्वयोर्वा एकैकस्य न्यूनबलता द्वयोर्द्वयोर्वा ते च न्यूनाधिक्ये मन्दमध्याधिक्यमात्रतया यथाकार्यमुन्नीयेते । तदिदं गुणानां वै

षम्यं तेनोपमर्द्द एकैकस्य न्यूनस्य द्व
योर्वा ऽभिभवः। तस्मात्तस्य भेदाः प
ञ्चाशदिति ॥ ४६ ॥

तानेव पञ्चाशद्भेदाननुगणयति।

पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च
करणवैकल्यात्। अष्टाविंशतिभेदास्तु
ष्टिर्नवधाष्टधा सिद्धिः ॥ ४७ ॥

पञ्चेति। अविद्यास्मितारागद्वेषा
भिनिवेशा यथासंख्यं तमो मोहमहामो
हतामिस्रान्धतामिस्रसञ्ज्ञकाः पञ्च वि
पर्ययविशेषाः। विपर्ययप्रभवानामप्य
स्मितादीनां विपर्ययस्वभावत्वात्। य
द्वा यदविद्यया विपर्ययेणावधार्य्यते
वस्तु। अस्मितादयस्तत्स्वभावाः स
न्तः तदभिनिविशन्ते। अत एव पञ्च

ननु पञ्चविपर्ययविशेषा इति न वाच्यमविद्याया एव विपर्ययत्वात् इतरेषां त्वस्मितादीनां तत्कार्यत्वादिति चेत्तत्राह। विपर्ययेति। तदेव दर्शयति। यदविद्ययेति। यस्मादस्मितादीनां विपर्ययस्वभावत्वमत एवेति ॥ ४७ ॥ ४८ ॥

पञ्चाविद्येत्याह भगवान् वार्षगण्यः ॥४७॥

संप्रति पञ्चानां विपर्ययभेदानामवान्तरभेदमाह ।

भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः । तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः ॥४८॥

भेदस्तमसोऽविद्याया अष्टविधः । अष्टस्वव्यक्तमहदहङ्कारपञ्चतन्मात्रेष्वनात्मबुद्धिरविद्या तमस्त्वष्टविधविषयत्वात्तस्याष्टविधत्वम् मोहस्य च अत्राप्यष्टविधो भेदश्चकारेणानुषज्यते । देवा हि अष्टविधमैश्वर्यमासाद्यामृतत्वाभिमानिनोऽणिमादिकमात्मीयं शाश्वतिकमभिमन्यन्ते सेयमस्मिता मोहः अष्टविधैश्वर्यविषयत्वादष्टविधः । दशविधो महामोहः शब्दादिषु पञ्चसु दिव्यादिव्यतया दशविधविषयेषु रञ्जनीयेषु रागश्चासक्तिर्महामोहः स च दशविधविषयत्वाद्दशविधः । तामिस्रो द्वे

षा ऽष्टादशधा शब्दादयो दशविषया
रञ्जनीयाः स्वरूपतः ऐश्वर्य्यन्त्वणिमा
दिकं न स्वरूपतो रञ्जनीयं किन्तु रञ्ज
नीयशब्दाद्युपायास्ते च शब्दादय उप
स्थिताः परस्परेणोपहन्यमानास्तदुपा
याश्चाणिमादयः स्वरूपेणैव कोपनीया
भवन्तीति शब्दादिभिर्दशभिः सहाणि
माद्यष्टकमष्टादशधेति तद्विषयो द्वे
षस्तामिस्रो ऽष्टादशविषयत्वादष्टा
दशधेति । तथा भवत्यन्धतामिस्रः
अभिनिवेशोऽन्धतामिस्रः तथेत्यनेना
ष्टादशधेत्यनुषज्यते । देवाः खल्वणिमा
दिकमष्टविधमैश्वर्यमासाद्य दश शब्दा
दीन्विषयान्भुञ्जानाः शब्दादयो भो
ग्यास्तदुपायाश्चाणिमादयो ऽस्माकमसु
रादिभिर्व्वोपघातयिष्यन्तेति विभ्यन्ति
तदिदं भयमभिनिवेशोऽन्धतामिस्रो
ष्टादशविषयत्वादष्टादशधेति । सोयं
पञ्चविधो विकल्पो विपर्ययो ऽवान्त

रभेदाद् द्वाषष्टिरिति ॥ ४८ ॥

तदेवं पञ्च विपर्ययभेदानुक्त्वा ऽष्टा विंशतिभेदामशक्तिमाह ।

एकादशेन्द्रियवधाः सह बुद्धिवधैर शक्तिरुद्दिष्टा । सप्तदश वधा बुद्धेर्वि पर्ययात्तुष्टिसिद्धीनाम् ॥ ४९ ॥

इन्द्रियवधस्य ग्रहोबुद्धिवधहेतुत्वे न न त्वशक्तिभेदपूर्णत्वेन । एकादशेन्द्रि यवधाः । बाधिर्यं कुष्ठितान्धत्वं ज डता ऽजिघ्रता तथा । मूकता कौण्यप ङ्गुत्वं क्लैब्योदावर्त्तमन्दताः । यथा संख्यं श्रोत्रादीनामिन्द्रियाणां वधाः एतावत्येव तु तद्धेतुका बुद्धेरशक्तिः स्व व्यापारे भवति । तथा चैकादशहेतुक त्वादेकादशधा बुद्धेरशक्तिरुच्यते । हे तुहेतुमतोरभेदविवक्षया च सामानाधि

कुष्ठिता त्वगिन्द्रियवैकल्यं । कौण्यं विकलपाणि-त्वम् । नन्विन्द्रियवधानां भिन्नानां बुद्धेरशक्तेश्च भि-न्नायाः सामानाधिकरण्यं कथं स्यादित्यत आह । हेतुहेतुमतोरिति । लक्ष्यमाणलक्षणानां नवानां तुष्टी-

करणाय। तदेवमिन्द्रियवधद्वारेण बुद्धेरशक्तिमुक्त्वा स्वरूपतोऽशक्तीराह। सह बुद्धिवधैरिति। कति बुद्धेः स्वरूपतो वधा इत्यत आह। सप्तदश वधा बुद्धेः। कुतः विपर्ययात्तुष्टिसिद्धीनां तुष्टयो नवधेति। तद्विपर्ययास्तन्निरूपणान्नवधा भवन्ति। एवं सिद्धयोऽष्टाविति तद्विपर्ययास्तन्निरूपणादष्टौ भवन्तीति॥ ४९॥

तुष्टिर्नवधेत्युक्तं ताः परिगणयति।

आध्यात्मिकाश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः। बाह्या विषयोपरमात्पञ्च नव तुष्टयोऽभिमताः ५०॥

आध्यात्मिकाः प्रकृतिव्यतिरिक्त आत्माऽस्तीति प्रतिपद्य ततोऽस्य श्रवणमननादिना विवेकसाक्षात्काराय त्वसदुपदेशात्तुष्टो यो न प्रयतते तस्याध्यात्मिकाश्चतस्रस्तुष्टयो भवन्ति प्रकृतिव्यतिरिक्तमात्मानमधिकृत्य यस्मात्ता

स्तुष्टयस्तस्मादाध्यात्मिकाः । कास्ता इत्यत आह । प्रकृत्युपादानकालभाग्याख्याः प्रकृत्यादिराख्या यासां तास्तथोक्ताः । तत्र प्रकृत्याख्या तुष्टिर्यथा कस्यचिदुपदेशो विवेकसाक्षात्कारो हि प्रकृतिपरिणामभेदस्तं च प्रकृतिरेव करोतीति कृतं तद्ध्यानाभ्यासेन तस्मादेवमेवास्तु वत्सेति सेयमुपदेष्टव्यस्य शिष्यस्य तुष्टिः प्रकृतौ सा तुष्टिः प्रकृत्याख्याम्भ उच्यते । या तु प्राकृत्यपि विवेकख्यातिर्न सा प्रकृतिमात्राद्भवति मा भूत् सर्वस्य सर्वदा तन्मात्रस्य सर्वान्प्रत्यविशेषात् । प्रव्रज्यायास्तु सा भवति तस्मात्प्रव्रज्यामुपाददीथाः कृतं ते ध्यानाभ्यासेनायुष्मन्नित्युपदेशे या तु

नां अष्टानां सिद्धीनां च ये विपर्ययास्ते सप्तदशवधा अत्र बुद्धेरित्यर्थः ॥ ४९ ॥

सर्वस्येति । विवेकख्यातिः प्रकृतिमात्रा चेत्तर्हि प्रकृतिमात्रं सर्वान्प्रत्यविशिष्टमिति । तस्मात्सर्वस्य सर्वदा विवेकख्यातिः स्यादित्यर्थः ॥ ५० ॥

ष्टिः सा उपादानाख्या सलिलमुच्यते। या तु प्रव्रज्यापि न सद्यो निर्वाणदेति सैव कालपरिपाकमपेक्ष्य सिद्धिं ते विधास्यति अलमुत्तप्ततया तवेत्युपदेशे या तुष्टिः सा कालाख्या ओघ उच्यते। या तु न प्रकृतेर्न कालान्नाप्युपादानाद्विवेकख्यातिरपि तु भाग्यादेव। अत एव मदालसापत्यानि अतिबालानि मातुरुपदेशमात्रादेव विवेकख्यातिमन्ति मुक्तानि बभूवुः। तस्माद्भाग्यमेव हेतुर्नान्यदिति इत्युपदेशे या तुष्टिः सा भाग्याख्या वृष्टिरुच्यते। बाह्या दर्शयति। बाह्यास्तुष्टयः शब्दादिविषयोपरमात्पञ्च याः खल्वनात्मनः प्रकृतिमहदहङ्कारादीनात्मेत्यभिमान्यमानस्य वैराग्ये सति तुष्टयस्ता बाह्याः। आत्मज्ञानाभावेनात्मानमधिकृत्य प्रवृत्तेः ताश्च वैराग्ये सति संभवन्ति। तुष्टय इति। वैराग्यस्य पञ्चहेतुकत्वाद्वैराग्याण्य

पिपञ्चतत्पञ्चत्वात्तुष्टयः पञ्चेति उपरम्यते ऽनेनेत्युपरमो विषयोपरमः विषया भोग्याः शब्दादयः पञ्च उपरमा अपि पञ्च । तथा हि । अर्ज्जनरक्षणक्षयभोगहिंसादोषदर्शनहेतुजन्मानः पञ्चोपरमा भवन्ति । तथा हि । सेवादयो धनार्ज्जनोपायाः ते च सेवकादीन् दुःखाकुर्वन्ति । दृप्यद्दुरीश्वरद्वास्थदण्डचण्डार्धचन्द्रजां । वेदनां भावयन्प्राज्ञः कः सेवास्वनुषज्यते । एवमन्येप्यर्जनोपायाः दुःखमिति । विषयोपरमे या तुष्टिः सैषा पारमुच्यते । तथार्जितं धनं राजैकागारिकाग्निजलौघादिभ्यो विनङ्क्ष्यतीति तद्रक्षणे महद्दुःखमिति भावयतो विषयोपरमे या तुष्टिः सा द्वितीया सुपारमुच्यते । तथा महतायासेनार्जितं धनं भुज्यमानं तत्क्षीयते इति तत्प्रक्षयं भावयतो विषयोपरमे या तुष्टिः सा तृतीया पारापारमुच्य

तं । एवं शब्दादिभोगाभ्यासात्प्रवर्धन्ते कामास्ते च विषयाप्राप्तौ कामिनं दुःखाकुर्वन्तीति भोगदोषं भावयतो विषयोपरमे या तुष्टिः सा चतुर्थी अनुत्तमाम्भ उच्यते । एवं नानुपहत्य भूतानि विषयोपभोगः संभवतीति हिंसादोषदर्शनाद्विषयोपरमे या तुष्टिः सा पञ्चमी उत्तमाम्भ उच्यते । एवमाध्यात्मिकीभिश्चतसृभिः बाह्याभिश्च पञ्चभिः नव तुष्टयोऽभिमताः ॥ ५० ॥

गौणमुख्यभेदैः सिद्धीराह ।

ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः । दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥ ५१ ॥

विहन्यमानस्य दुःखस्य त्रित्वात्तद्विघातास्त्रय इति इमा मुख्यास्तिस्रः सिद्धयस्तदुपायतया त्वितरा गौण्यः पञ्च सिद्धयस्ता अपि हेतुहेतुमत्तया व्यवस्थिताः तत्राद्याऽध्ययनलक्षणा सिद्धिर्हेतुरे

व । मुख्यास्तु सिद्धयो हेतुमत्य एव । मध्यमास्तु हेतुहेतुमत्यः । विधिवद्गुरुमुखादध्यात्मविद्यानामक्षरस्वरूपग्रहणमध्ययनं प्रथमा सिद्धिस्तारमुच्यते । तत्कार्यंशब्दः शब्द इति शब्दज्ञानजनितमर्थस्वरूपज्ञानमुपलक्षयति । कार्ये कारणोपचारात् । सा द्वितीया सिद्धिः सुतारमुच्यते । पाठार्थाभ्यां तदिदं द्विधा श्रवणं ऊहस्तर्कः आगमाविरोधिन्यायेनागमार्थपरीक्षणं । परीक्षणं च संशयपूर्वपक्षनिराकरणेनोत्तरपक्षव्यवस्थापनं तदिदं मननमाचक्षते आगमिनः सा तृतीया सिद्धिस्तारतारमुच्यते । सुहृत्प्राप्तिन्यायेन स्वयं परीक्षितमप्यर्थं न श्रद्दधते न यावद्गुरुशिष्यसब्रह्मचारिभिः सह संवाद्यते । अतः सुहृदां गुरुशिष्यसब्रह्मचारिणां संवादकानां प्राप्तिः सा सिद्धिश्चतुर्थी रम्यक उच्यते ।

सब्रह्मचारिणः सहश्रोतारः । नन्वस्मिन्सूत्रे शुद्धि-

दानं च शुद्धिर्विवेकज्ञानस्य दैप् शोधने इत्यस्माद्धातोर्दानपदव्युत्पत्तेः । यदाह भगवान्पतञ्जलिः । विवेकख्यातिरविप्लवा दुःखत्रयस्य हानोपाय इति । अविप्लवः शुद्धिः सा च सवासनसंशयविपर्यासानां परिहारेण विवेकसाक्षात्कारस्य स्वच्छप्रवाहेऽवस्थानं । सा च न विनादरनैरन्तर्यदीर्घकालसेविताभ्यासपरिपाकाद्भवतीति । दानेन विवेकख्यात्या कार्येण अभ्यासः सोऽपि सङ्गृहीतः । सेयं पञ्चमी सिद्धिः सदा मुदितमुच्यते । तिस्रश्च मुख्याः सिद्धयः प्रमोदमुदितमोदमाना इत्यष्टौ सिद्धयः । अन्ये त्वाचक्षते । उपदेशाद्विना प्राग्भावीयाभ्यासवशात्तत्त्वस्य स्वय

शब्दाज्ञानावारकत्वमुक्तार्थः संमत इत्यत आह । अविप्लव इति । शुद्धेर्लक्षणमाह । सा चेति । किं च कारणेन विना न कार्योत्पत्तिरित्यन्यथानुपपत्त्या ज्ञानेन कार्येण तदपि सङ्गृहीतमित्याह । सा चेति । पूर्वेषां व्याख्यानमाह । अन्ये त्विति ।

मूहनं यत् सा सिद्धिरूहः । यस्य सां ख्यशास्त्रपाठमन्यदीयमाकर्ण्य तत्त्वज्ञा नमुत्पद्यते सा सिद्धिः शब्दः । शब्दपा ठादनन्तरं जातत्वात् । यस्य शिष्याचार्य सम्बन्धेन सांख्यशास्त्रं ग्रन्थतोऽर्थतश्चा धीत्य ज्ञानमुत्पद्यते साऽध्ययनहेतुका सिद्धिरध्ययनं । सुहृत्प्राप्तिरिति । यस्याधिगततत्त्वं सुहृदं प्राप्य ज्ञान मुत्पद्यते सा ज्ञानलक्षणा सिद्धिस्तस्य सुहृत्प्राप्तिः । दानं च सिद्धिहेतु र्धनादिदानेनाराधितो ज्ञानी ज्ञानं प्रयच्छति । अस्य च युक्तायुक्तत्वं सूरिभिरेवावगन्तव्यं इति कृतं परदो षोद्भावनेन नः सिद्धान्तमात्रव्याख्यानप्र वृत्तानामिति । सिद्धितुष्टिविपर्ययेणाश क्तिर्बुद्धिवधः सप्तदशधा । द्रष्टव्यः अत्र प्रत्ययसर्गे सिद्धिरुपादेयेति प्रसिद्धमेव तन्निवारणहेतवस्तु विपर्ययाशक्तितुष्ट

दूषयति । तस्येति । व्याख्यानस्येत्यर्थः ॥ ५१ ॥

यो हेया इत्याह। सिद्धेः पूर्वाङ्कुशस्त्रि विधः पूर्व इति विपर्ययाऽशक्तितुष्टीः परामृशति। ताः सिद्धिकरणानामङ्कुशो निवारकत्वात्। अतः सिद्धिपरिपन्थित्वाद् विपर्ययाशक्तितुष्टयो हेया इत्यर्थः अङ्कुश इवेति ॥ ५१ ॥

स्यादेतत्। पुरुषार्थप्रयुक्ता सृष्टिः स च पुरुषार्थः प्रत्ययसर्गाद्वा तन्मात्रसर्गाद्वा सिद्ध्यतीति कृतमुभयसर्गेणेत्यत आह।

न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः। लिङ्गाख्यो भावाख्यस्तस्माद्द्विविधः प्रवर्तते सर्गः ॥ ५२ ॥

लिङ्गमिति तन्मात्रसर्गमुपलक्षयति। भावैरिति च प्रत्ययसर्गं। एतदुक्तं भवति। तन्मात्रसर्गस्य पुरुषार्थसाधनत्वं स्वरूपं च न प्रत्ययसर्गाद्विना भवति। एवं प्रत्ययसर्गस्य स्वरूपञ्च पुरुषार्थसाधनत्वं च न तन्मात्राद्वृते इ

त्युभयथा सर्गप्रवृत्तिः । भोगः पुरुषार्थो न भोग्यान् शब्दादीन् विहाय भोगायतनं शरीरद्वयमन्तरेण संभवतीति उपपन्नस्तन्मात्रसर्गः । एवं स एव भोगोपभोगसाधनानीन्द्रियाणि चान्तःकरणानि चान्तरेण न संभवति । न च तानि धर्मादीन्भावान्विना सर्गः संभवन्ति । न चापवर्गहेतुर्विवेकख्यातिरुभयसर्गं विना इत्युपपन्नोभयविधः सर्गः ।

स्वरूपपुरुषार्थसाधनत्वसिद्ध्यन्यथानुपपत्त्याप्युभयसर्गः स्यादित्याह । भोग इति । भोगसाधनेन्द्रियान्तःकरणानि विना भोगो न स्यात्तर्हि भावसर्गे किमायातमित्याशङ्क्याह । न चेति । भोग्याः शब्दादयो विशेषाः तन्मात्रकं भौतिकं च भोगायतनं शरीरद्वयं तन्मात्रसर्गं इति भोगसाधनेन्द्रियान्तः करणानि तन्मात्रसर्गः धर्मादीन् भावान् प्रत्युभयसर्गमन्तरेण सिध्यतीति न चेत्यर्थः । किं च न केवलं भोगलक्षणपुरुषार्थसिद्ध्यन्यथानुपपत्त्या द्विविधः सर्गोऽपि तु मोक्षलक्षणपुरुषार्थसिद्ध्यन्यथानुपपत्त्या द्विविध एव सर्ग इत्याह । न चापवर्गहेतुरिति । ननु भावैर्विना चेल्लिङ्गं लिङ्गेन विना भावनिर्वृत्तिर्न चेत्तर्हि ह्यन्योन्याश्रयसिद्धिकत्वात् नोभयसिद्धिरित्यत आह । अना-

अनादित्वाच्च बीजाङ्कुरवन्नान्योन्या श्रयदोषमावहति कल्पादावपि प्राचीन कल्पोत्पन्नतावलिङ्गसंस्कारवशाद्भाव लिङ्गयोरुत्पत्तिर्नानुपपन्नेति सर्वमव दात ॥ ५२ ॥

विभक्तः प्रत्ययसर्गः भूतादिसर्गं वि भजते ।

अष्टविकल्पो दैवस्तैर्यग्योन्यश्च प ञ्चधाभवति । मानुषश्चैकविधः समासतो भौतिकस्सर्गः ॥ ५३ ॥

ब्राह्मः प्राजापत्य ऐन्द्रः पैत्रः गान्ध र्वः यक्षः राक्षसः पैशाचः इत्यष्टविधो दैवः सर्गः तैर्यग्योन्यश्च पञ्चधा भवति पशुमृगपक्षिसरीसृपस्थावराः । मानुष

दित्वाच्चेति । नन्वनादित्वाद्बीजाङ्कुरवदुपपद्यमानत्वात् सर्गयोर्माभूदन्योन्याश्रयलक्षणो दोषोऽधुना प्रलये सर्वंजगन्निर्लेपं प्रलीयसर्गादावुत्पद्यते तदा पुनः स्यादितरेतराश्रय इत्यत्राह । कल्पादावपीति । प्रलीयमानमपि जगद्बीजशक्तिविशेष एव प्रलीयते । न तु निर्लेप इति । अवदातं । शुभम् ॥ ५२ ॥

श्चैकविधः । ब्राह्मणत्वाद्यवान्तरजातिभेदाविवक्षया । संस्थानस्य चतुष्वपि वर्णेष्वविशेषादिति समासतः सङ्क्षेपतः स भौतिकः सर्गो घटादयस्त्वशरीरत्वेपि स्थावरा एवेति ॥ ५३ ॥

भौतिकस्यास्य सर्गस्य चैतन्योत्कर्षनिकर्षतारतम्याभ्यामूर्द्ध्वाधोमध्यभावेन त्रैविध्यमाह ।

ऊर्ध्वं सत्वविशालस्तमोविशालश्च मूलतः सर्गः । मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्य्यन्तः ॥ ५४ ॥

ऊर्ध्वं सत्वविशाल इति । द्युप्रभृतिसत्यान्तो लोकः सत्वबहुलः तमोविशालश्च मूलतः सर्गः पश्वादिः स्थावरान्तः सोयं मोहमयत्वात्तमोबहुलः । भूर्लोकस्तु सप्तद्वीपसमुद्रसंनिवेशो मध्ये

ननु घटादिसर्गः परिशिष्ट इत्याशङ्क्य स्थावरेन्तर्भावयति । घटादयस्त्विति ॥ ५३ ॥

त्रैविध्यमाह । आधारेणेत्यर्थः ॥ ५४ ॥ ५५ ॥

रजोविशालो धर्म्माधर्म्मानुष्ठानपरत्वा
द् दुःखबहुलत्वाच्च तां इमां लोकसंस्थि
तिं सङ्क्षिपति ब्रह्मादिस्तम्बपर्यन्तः
स्तम्बग्रहणेन वृक्षादयः सङ्गृहीताः ५४

तदेवं सर्गं दर्शयित्वा तस्यापवर्गसा
धनवैराग्योपयोगिनीं दुःखहेतुतामाह।

तत्र जरामरणकृतं दुःखं प्राप्नोति
चेतनः पुरुषः। लिङ्गस्याविनिवृत्तेस्त
स्माद्दुःखं स्वभावेन ॥ ५५ ॥

तत्र शरीरादौ यद्यपि विविधा वि
चित्रानन्दभोगभागिनः प्राणभृद्भेदा
स्तथापि सर्वेषां जरामरणकृतं दुःखम
विशिष्टं सर्वस्य खलु कृमेरपि मरणत्रा
सो मा न भूवं भूयासमित्येवमात्मका
स्ति। दुःखञ्च भयहेतुरिति दुःखं मरणं।
स्यादेतद्दुःखादयः प्राकृता बुद्धिगुणाः
तत्कथमेते चेतनसम्बन्धिनो भवन्त्यत
आह। पुरुष इति। पुरि लिङ्गे शे
ते इति पुरुषः लिङ्गञ्च तत्सम्बन्धीति

चेतनोऽपि तत्सम्बन्धीभवतीत्यर्थः । कुतः पुनर्लिङ्गसम्बन्धि दुःखं पुरुषस्य चेतनस्येत्यत आह । लिङ्गस्याविनिवृत्तेः पुरुषाद्भेदाग्रहाल्लिङ्गधर्मानात्मन्यध्यवस्यति पुरुषः । अथ वा दुःखमाप्रावर्वाधराङ्गानेन कथ्यते । लिङ्गं यावन्न निवर्त्तते तावदिति ॥ ५५ ॥

उक्तस्य सर्गस्य कारणविप्रतिपत्ती निराकरोति ।

इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्यन्तः । प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ॥ ५६ ॥

आरभ्यते इत्यारम्भः सर्गः प्रकृत्यैव कृतो नेश्वरेण न ब्रह्मोपादानो नाप्यकारणः अकारणत्वे हि अत्यन्ताभावोऽत्यन्तभावो वा स्यात् । न ब्रह्मोपादानश्चितिशक्तेरपरिणामात् नेश्वरा

पक्षत्रयदूषणमाह । अकारणत्वइत्यादिना । ईश्वरः प्रकृतिं नाधितिष्ठति निर्व्यापारत्वात्सम्प्रतिपन्नवदित्याह । नेति । ननु निर्व्यापारोस्तु प्रकृतिमप्यधिति-

र्धाष्ठितप्रकृतिकृता निर्व्यापारस्याधिष्ठातृत्वासम्भवात्। न हि निर्व्यापारस्तक्षा वा स्यादासधितिष्ठति। ननु प्रकृतिकृतश्चेत्तस्या नित्यायाः प्रवृत्तिशीलाया अनुपरमात्सदैव सर्गः स्यादिति न कश्चिन्मुच्येतेत्यत आह। प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः। प्रतीतिश्च यथौदनकाम ओदनाय पाके प्रवृत्त ओदनसिद्धौ निवर्त्तते। एवं प्रत्येकं पुरुषान्मोचयितुं प्रवृत्ता प्रकृतिर्यं पुरुषं मोचयति तं प्रति पुनर्न प्रवर्तते तदिदमाह। स्वार्थ इव स्वार्थे यथा तथा परार्थे आरम्भ इत्यर्थः॥५६॥

स्यादेतत्। स्वार्थं परार्थं वा चेतनः प्रवर्त्तते न च प्रकृतिरचेतनैवं भवितुमर्हति। तस्मादस्ति प्रकृतेरधिष्ठाता चेतनः। न च क्षेत्रज्ञाश्च चेतना अपि

ष्ठनु विपक्षे बाधकाभावादित्यप्रयोजकीयं हेतुरित्यत्राह। न हीति॥ ५६॥

प्रकृतिमधिष्ठातुमर्हन्ति तेषां प्रकृतिस्व रूपानभिज्ञत्वात्। तस्मादस्ति सर्वार्थ दर्शी प्रकृतेरधिष्ठाता स चेश्वर इत्यत आह।

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य। पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य॥ ५७॥

दृष्टमचेतनमपि प्रयोजनं प्रवर्त्तमा नं यथा वत्सविवृद्ध्यर्थं क्षीरमचेतनं प्रवर्तते। एवं प्रकृतिरचेतनापि पुरुष विमोक्षणाय प्रवर्तिष्यते। न च क्षीर प्रवृत्तेरपीश्वराधिष्ठाननिबन्धनत्वेन सा ध्यत्वाद्व साध्येन व्यभिचार इति सा म्प्रतं प्रेक्षावत् प्रवृत्तेः स्वार्थकारुण्या

अचेतनमपि। प्रधानमीश्वरानधिष्ठितमपि। प्रवर्तितुमर्हति यथान्यत्वे सति परार्थत्वात् क्षीरवदित्युक्तं। ननु क्षीरस्येश्वराधिष्ठितस्यैव प्रवर्तमानत्वाद् दृष्टान्तस्य साध्यविकलत्वे सिषाधयिषितसिद्ध्यभावात् प्रेक्षावत्प्रवृत्तिर्जगत्सर्गस्य स्यादिति चेत्तत्राह। न चेति। तत्र हेतुमाह। प्रेक्षावत्प्रवृत्तेरिति।

भ्यां व्याप्यत्वात्तं च जगत्सर्गाद्व्याव र्त्तमाने प्रेक्षावत्प्रवृत्तिपूर्वकत्वमपि व्यावर्त्तयतः। न ह्यवाप्तसकलेप्सितस्य भगवतो जगदसृजतः किमप्यभिलषितं न भवति। नापि कारुण्यादस्य सर्गे प्रवृत्तः। प्राक्सर्गाज्जीवानामिन्द्रियशरीरविषयानुत्पत्तौ दुःखाभावेन कस्य प्रहाणेच्छाकारुण्यं सर्गोत्तरकालं दुःखिनोऽवलोक्य कारुण्याभ्युपगमे दुरुत्तर

प्रेक्षावत्प्रवृत्तिः स्वार्थकारुण्यनिबन्धना प्रेक्षावत्प्रवृत्तित्वात् सम्प्रतिपन्नवदित्यस्तु प्रकृते किमायातमित्यत्राह। तं चेति। स्वार्थकारुण्ये इत्यर्थः तर्हीश्वरस्यापि स्वार्थः कश्चिद्भविष्यति जगत्सर्गे कारुण्यं चेत्याशङ्क्य प्रत्येकमङ्गे निराचष्टे। न हीत्यादीना। आप्तकामश्रुतिविरोधात्सर्गात्प्राक् परेषां जीवानां दुःखसाधनानुत्पादे दुःखाभावेन परदुःखप्रहाणेच्छाकारुण्यलक्षणस्यासम्भवग्रस्तत्वाच्च नोभयसंबन्ध इत्यर्थः। ननु सकलप्रेप्सितत्वात् स्वार्थो मा भूदीश्वरस्य जगत्सर्गे प्राक् सृष्टेर्दुःखाभावात् कारुण्यं च सृष्ट्यन्तरकालं दुःखिजीवदर्शनेन कारुण्यादीक्षतीश्वर इति चेत्तत्राह। सर्गोत्तरकालं चेति। दुरुत्तरमिति। अ-

मितरेतराश्रयत्वं दूषणं । कारुण्येन सृष्टिः सृष्ट्या च कारुण्यमिति । अपि च करुणया प्रेरित ईश्वरः सुखिन एव जन्तून्सृजेन्न विचित्रान् कर्म्मवैचित्र्याद्वैचित्र्यमिति चेत् कृतमस्य प्रेक्षावतः कर्म्माधिष्ठानेन तदनधिष्ठानमात्रादेवाचेतनस्यापि कर्म्मणः प्रवृत्त्यनुपपत्तेस्तत्कार्य्यशरीरेन्द्रियविषयानुत्पत्तौ दुःखानुत्पत्तेरपि सुकरत्वात् । प्रकृतेस्त्वचेतनायाः प्रवृत्तेर्न स्वार्थानुग्रहो न वा कारुण्य प्रयोजकमिति नोक्तदोषप्रसङ्गः

परिहार्य्यमित्यर्थः । इतरेतराश्रयदोषमेव दर्शयति । कारुण्येनेति । किं चेश्वरस्य करुणया स्रष्टृत्वे जगति दुःखाभावप्रसङ्गः स्यादित्याह । अपि चेति । पूर्वपक्षवादी शङ्कते । कर्म्मवैचित्र्यादिति । परिहरति सिद्धान्ती । कृतमिति । कर्म्माधिष्ठाननिबन्धनविचित्रजगत्सर्जनकल्पनादीश्वरस्य वरं तदनधिष्ठानादसर्जनमेव सर्वेषां जीवानां सर्गाभावे दुःखित्वाभावाद् दुःखाभावे कारुण्यस्याविद्यमानत्वात् सर्गाभावहेतुस्तदिति भावः । एवं परपक्षे दोषानभिधाय स्वपक्षे तदभावमाह । प्रकृतेस्त्विति ॥ ५७ ॥ ५८ ॥ ५९ ॥

वतारः । पारार्थ्यमात्र तु प्रयोजकमुपप
द्यते । तस्मात्सुष्ठूक्तं च वत्सविवृद्धि
निमित्तमिति ॥ ५७ ॥

स्वार्थ इवेति दृष्टान्तं तद्विभजते ।

औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु
प्रवर्त्तते लोकः । पुरुषस्य विमोक्षार्थं
प्रवर्त्तते तद्वदव्यक्तम् ॥ ५८ ॥

औत्सुक्य इच्छा सा खल्विष्यमा
णप्राप्तौ निवर्त्तते इष्यमाणश्च स्वार्थः इ
ष्टलक्षणत्वात् फलस्य । दार्ष्टान्तिके यो
जयति । पुरुषस्य विमोक्षार्थं प्रवर्त्तते
तद्वदव्यक्तम् ॥ ५८ ॥

ननु भवतु पुरुषार्थः प्रकृतेः प्रवर्त
को निवृत्तिस्तु कुतस्त्या प्रकृतेरित्यत
आह ।

रङ्गस्य दर्शयित्वा निवर्त्तते नर्तकी
यथा नृत्यात् । पुरुषस्य तथात्मानं प्र
काश्य विनिवर्तते प्रकृतिः ॥ ५९ ॥

रङ्गस्येति । स्थानेन स्थानिनः पा

ाख्यद्वानुपलब्धुर्यात । आत्मानं शब्दा आत्मनापुरुषाद्भेदेन च प्रकाशयेत्यर्थः॥५९॥

स्यादेतत् । प्रवर्त्तता प्रकृतिः पुरुषार्थं पुरुषादुपकृतात्प्रकृतिर्लप्स्यते कंचिदुपकारं आज्ञासम्पादनाराधितादिवाज्ञापयितुर्भुजिष्या तथा च न परार्थोऽस्यारम्भ इत्यत आह ।

नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः । गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति ॥ ६० ॥

यथा गुणवानुपकार्योऽपि भृत्यो निर्गुणेऽत एवानुपकारिणि स्वामिनि निष्फलाराधनः । एवमियं प्रकृतिः तपस्विनी गुणवत्युपकारिण्यनुपकारिणि निर्गुणे पुरुषे व्यर्थपरिश्रमेति पुरुषार्थमेव यतते न स्वार्थमिति सिद्धं ॥ ६० ॥

स्यादेतत् । नर्तकी नृत्यं परिषद्भ्यो दर्शयित्वा निवृत्तापि पुनस्तद्दृष्टि

भुजिष्यः । किङ्करः ॥ ६० ॥ ६१ ॥

कौतूहलात्प्रवर्तते यथा तथा प्रकृतिरपि पुरुषार्थायात्मानं दर्शयित्वा निवृत्तापि पुनः प्रवर्त्स्यतीत्यत आह ।

प्रकृतेः सुकुमारतरं न किंचिदस्तीति मे मतिर्भवति । या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ ६१ ॥

सुकुमारतरतातिपेशलता परपुरुषदर्शनासहिष्णुतेति यावत् । असूर्यं पश्या हि कुलवधू रतिमन्दाक्षमन्थरा प्रमादाद्विगलितशिरोऽञ्चला चेदालोक्यते परपुरुषेण तदासौ तथा प्रयतते अप्रमत्ता यथैनां परपुरुषान्तराणि न पुनः पश्यन्तीति । एवं प्रकृतिरपि कुलवधूतोप्यधिका दृष्टा विवेकेन न पुनर्द्रक्ष्यत इत्यर्थः ॥ ६१ ॥

स्यादेतत् । पुरुषश्चेदगुणोऽपरिणामी कथमस्य मोक्षः मुचेर्बन्धनविश्लेषार्थत्वात् सवासनक्लेशकर्माशयानां च बन्धनसमाख्यानां पुरुषेऽपरिणामिन्य

सम्भवात् । अत एवास्य च पुरुषस्य न संसारश्च प्रेत्यभावात् । परनामास्ति निष्क्रियत्वात् तस्मात्पुरुषविमोक्षार्थमिति रिक्तं वच इतीमामाशङ्कामुपसंहार व्याजेनाभ्युपगच्छन्नपाकरोति ।

तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित् । संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ ६२ ॥

अद्धा न कश्चित्पुरुषो बध्यते न कश्चित्संसरति न कश्चिन्मुच्यते । प्रकृतिरेव तु नानाश्रयासती बध्यते संसरति मुच्यते चेति । बन्धमोक्षसंसाराः पुरुषेषूपचर्य्यन्ते यथा जयपराजयौ भृत्यगतावपि स्वामिन्युपचर्य्येते तदाश्रयेण भृत्यानां तद्भागित्वात् तत्फलस्य च शोकलाभादेः स्वामिसम्बन्धाद्भोगापवर्ग

कथं भृत्यगतयोः स्वामिन्युपचार इत्याशङ्क्य उभयं दर्शयति । स्वाश्रयेणेति । स्वाम्याश्रयेण तद्भागित्वादिति । जयाजयभागित्वादित्यर्थः ननु स्वामिभृत्ययोः स्वस्वामिलक्षणसंबन्धस्य विद्यमानत्वात् भवतूपकारकस्तयोर्जयपराजययोर्भृत्यगतयोः तद्स्वामिनि अत्र तु

योः प्रकृतिगतयोरपि विवेकाग्रहात्पुरुषसम्बन्ध उपपादित इति सर्वं पुष्कलं ॥ ६२ ॥

नन्वगतं प्रकृतिगताबन्धसंसारापवर्गाः पुरुषे उपचर्यन्तइति किं साधनाः पुनरेते प्रकृतेरित्यत आह ।

रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः । सैव च पुषार्थं प्रति विमोचयत्येकरूपेण ॥ ६३ ॥

तत्वज्ञानवर्ज्जं बध्नाति धर्मादिभिः सप्तभीरूपैर्भावैरिति पुरुषार्थं प्रति भोगापवर्गं प्रति आत्मनात्मानमेकरूपेण तत्वज्ञानेन विवेकख्यात्याविमोचयति पुनर्भोगापवर्गौ न करोतीत्यर्थः ॥६३॥

अवगतमीदृशं तत्वं ततः किमित्यत आह ।

प्रकृतिगतयोर्भोगापवर्गयोः पुरुषसम्बन्धे कारणाभावान्नोपचार इत्याशङ्क्याभेदलक्षणात्कारणात् स इति प्रतिपादितमित्याह । भोगापवर्गयोरिति ॥ ६२ ॥ ६३ ॥

एवं तत्वाभ्यासान्नास्मि न मे नाह मित्यपरिशेषम् । अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥

तत्वेन विषयेण विषयिज्ञानमुपल क्षयति । उक्तरूपप्रकारतत्वविषयज्ञाना भ्यासादादरनैरन्तर्य्यदीर्घकालसेवितात्स त्वपुरुषान्यतासाक्षात्कारिज्ञानमुत्पद्यते । यद्विषयश्चाभ्यासस्तद्विषयकमेव साक्षा त्कारमुपजनयति । तत्वविषयश्चाभ्यास इति । तत्वसाक्षात्कारं जनयति । अत उ क्तं विशुद्धमिति । कुतो विशुद्धमित्यत आ ह । अविपर्ययादिति । संशयविपर्ययौ हि ज्ञानस्याविशुद्धी तद्रहितं विशुद्धं त दिदमुक्तं । अविपर्ययादिति नियतम

विमतस्तत्वविषयो ज्ञानाभ्यासः स्वविषये साक्षा- त्कारजनकः तद्विषयाभ्याससत्वादित्यस्यानुमानस्य व्या प्तिमाह । यद्विषयश्चेति । दृष्टान्तःसंप्रतिपन्न एवेति कृत्वा उपनयनिगमने दर्शयति । तत्वविषयश्चेति । ननु तत्वानवधारणं ज्ञानसंशयः मिथ्याध्यवसायो विपर्यय इति भिन्नलक्षणलक्षितत्वात्संशयविपर्यययोः कथं वि-

नियततया गृह्णन्नुभयो विपर्ययश्च तं नाविपर्ययादिति संशयविपर्ययाभ्यासाभावोदर्शितः । तत्वविषयत्वाच्च संशयविपर्ययाभावः । स्यादेतत् । उत्पद्यतामीदृशाभ्यासात्तत्वज्ञानं । तथाप्यनादिना मिथ्याज्ञानसंस्कारेण मिथ्याज्ञानं जनयितव्यं तथा च तन्निबन्धनस्य संसारस्यानुच्छेदप्रसङ्ग इत्यत उक्तं । केवलमिति । विपर्ययेणासंभिन्नं यद्यप्यनादिविपर्ययवासना तथापि तत्वज्ञानवासनया तत्वसाक्षात्कारमादधत्यादिमत्यापि शक्या समुच्छेत्तुं तत्वपक्षपातो हि धियां स्वभावः । यथाहुर्बाह्या अपि । नि

पर्ययेण संशयोपि गृह्यते इत्यत आह । नियत इति । आदराभ्यस्तज्ञानोत्पत्युदितस्वविषयसाक्षात्कारज्ञानस्वरूपपर्यालोचनया ऽविपर्ययादित्यनेन संशयविपर्ययाभावो दर्शित इत्युक्तम् । इदानीं ज्ञेयपर्यालोचनयैकरस इत्याह । तत्वविषयत्वाच्चेति । असंभिन्नमित्यसंपृक्तं विपर्ययसहवृत्तिशङ्कामनूद्याङ्गीकारेणापराकरोति । यद्यपीत्यादिना । उक्तार्थे हेतुमाह । तत्वपक्षपातोहीति । बौद्धानामपि संमतिमाह । यथाहु-

रुपद्रवभूतार्थं स्वभावस्य विपर्य्ययैः ।
न बाधो ऽयत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपातत
इति । ज्ञानस्वरूपमुक्तं नास्मि न मे ना
हमिति । नास्मीत्यात्मनि क्रियामात्रं

बाह्या अपीति । वेदबाह्या अपि । बहिर्मुखा बौद्धा अप्येतद्वदन्ति किमुतान्ये श्रुतिप्रमाणका इत्यर्थः । निरुपद्रवो निर्दोषः । भूतार्थस्वभावो यस्य नैरात्म्यादितत्त्वज्ञानस्य तस्य विपर्ययैर्मिथ्याज्ञानैर्बाधो न स्यात् । ननु यद्यपि तत्त्वज्ञानं भूतार्थस्वरूपं । तथापि यत्नाधीनमिति । मिथ्याज्ञानेन तद्बाध इत्यत्राह । अयत्नवत्त्वेपीति । यस्य बलवत्त्वेन बाधो बुद्धेः पक्षपातित्वेन प्रबलत्वादित्यर्थः । यदि न बाधोऽबलवत्त्वेपि इति पाठः अर्थस्तु स एव न बाधे यत्नवत्त्वेपीति वा पाठः तस्यार्थः यस्यार्थभावनाप्रकर्षविषयदार्ढ्यं सर्वविषयं ज्ञानमुत्पद्यते तेन विषयीकृतस्य निरुपद्रवपरमार्थः स्वभावस्य संस्कारबलादनुवर्त्तमानैर्विपर्ययैर्न बाधा कुतो बुद्धेः परमार्थस्वभावजन्याया वस्तुपक्षपातित्वेन प्राबल्यात् । ननु लङ्घनाभ्यासवन्नैरात्म्यादिभावनापि सातिशयमेव कार्यं जनयति कथं सर्वविषयज्ञानलाभ इत्याशङ्कानिरासायोक्तं प्रयत्नवत्त्वेपीति । लङ्घनाभ्यासे सति पूर्वस्मादधिकं लङ्घने प्रयत्नाधिक्यं सातिशयं वास्तु अत्र त्वयत्नवत्त्वेपि अधिकप्रयत्नानपेक्षत्वेपि बुद्धेस्तत्पक्षपातित्वेनोदयो निरतिशयोत्कर्षोसिद्धिश्च-

निषेधतीति। यथाहुः। कृभ्वस्तयः क्रिया सामान्यवचना इति। तथाचाध्यवसायाभिमानः सङ्कल्पालोचनानि चान्तराणि। वाह्याश्च सर्वे व्यापारा आत्मनि प्रतिषिद्धानि बोद्धव्यानि। यतश्चात्मनि व्यापारावेशो नास्त्यतो नाहमहमिति कर्तृपदमहं जानामि अहं जुहोमि अहं ददे अहं भुञ्जे इति सर्वत्र कर्तुः परामर्शान्निष्क्रियत्वे च सर्वत्र कर्तृत्वाभावः। ततः सुष्टूक्तं नाहमिति। अत एव न मे कर्ता हि स्वामितां लभते तदभावात्कुतो भाविकी स्वामितेत्यर्थः।

त्यर्थः। विशेषतस्तु चिदात्मस्वभावस्य कुतोबाध इत्युक्तं भवति। तदुक्तं वार्तिककारेण। बाधितत्वादविद्याया विद्वांसो नैव बाध्यते। तद्वासनानिमित्तत्वं याति विद्या स्मृतेर्ध्रुवं। नास्मीति। क्रियासामान्यप्रतिषेध आत्मनोत्यभाणि। अत्र वैयाकरणसंमतिमाह॥ यथाहुरिति। क्रियासामान्यनिराकरणेनैव क्रियाविशेषनिराकरणमर्थसिद्धमित्याह। तथा चेति। कुतो भवनं कुतोभावः। तेन चरतीति कुतो भाविकी न कुतोपि स्वामितेत्येतत् नास्मीत्यत्र न अस्मीति पद

अथ वा नास्मीति पुरुषेऽस्मिन् प्रसव धर्म्मोऽप्रसवधर्म्मत्वाच्च कर्तृत्वमाह । नाहमिति । अकर्तृत्वाच्च न स्वामित्वमित्यत आह । न मे इति । नन्वेतावन्तु ज्ञातेऽत्रापि कश्चित्कदाचिदज्ञातो विषयोऽस्ति तदज्ञानं जन्तून्बन्धयिष्यतीत्यत आह । अपरिशेषमिति । नास्ति किंचिदस्मिन्नपरिशिष्टं ज्ञातव्यं यदज्ञानं बन्धयिष्यतीत्यर्थः ॥ ६४ ॥

किं पुनरीदृशेन तत्त्वसाक्षात्कारेण सिद्ध्यतीत्यत आह ।

तेन निवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्तां । प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वच्छः ॥ ६५ ॥

भोगविवेकसाक्षात्कारौ हि प्रकृतेः प्रसोतव्यौ तौ च प्रसूताविति नास्याः

विच्छेदेन क्रियासामान्यनिषेधः कृत आत्मनीत्युक्तं । इदानीं पुरुषवाचकप्रथमैकवचनान्तनृशब्दपरत्वेन व्याचष्टे । अथवेति । ना अस्मीति पदविच्छेदेन संहितासाम्यादिति भावः ॥ ६४ ॥

प्रसोतव्यमत्र शिष्यते यत्प्रसोष्यति इति निवृत्तप्रसवा प्रकृतिः विवेकज्ञानरूपो योऽर्थस्तस्य अत्राः सामर्थ्यं तस्मादतत्त्वज्ञानपूर्वकाणि खलु धर्माधर्माज्ञानवैराग्यैश्वर्य्यानैश्वर्याणि । वैराग्यमपि केवलतौष्टिकानामतत्त्वज्ञानपूर्वकमेव । तत्र तत्त्वज्ञानं विरोधित्वेनातत्त्वज्ञानमुच्छिनत्ति कारणनिवृत्त्या च सप्तरूपाणि निवर्तन्त इति सप्तरूपविनिवृत्ता प्रकृतिः अवस्थित इति निष्क्रियः स्वच्छ इति रजस्तमोवृत्तिकलुषया बुद्ध्या असंभिन्नः । सात्त्विक्या तु बुद्ध्या तदाप्यस्य मनाक्संभेदोऽस्त्येव । अन्यथैवंभूतप्रकृतिदर्शनानुपपत्तेरिति ॥ ६५ ॥

ननु तर्हि विषयदोषदर्शनाद् रागोऽपसरते दोषदर्शनं च तत्त्वज्ञानाद्भवतीति वैराग्यं तत्त्वज्ञानपूर्वकमिति चेत्तत्राह । वैराग्यमपीति । अस्त्वेवं प्रकृते विवेकज्ञाने किमायातमित्यत आह । तत्रेति । भवतु तत्त्वाज्ञानेनातत्त्वज्ञानोच्छेदः । ततः किमित्यत आह । कारणेति । मनाक् स्वल्पः संभेदः संपर्कः । तथाप्यस्य

स्यादेतत् । निवृत्तप्रसवामिति न मृष्यामहे संयोगकृतो हि सर्ग इत्युक्तम् । योग्यता च संयोगः भोक्तृत्वयोग्यता च पुरुषस्य चैतन्यं भोग्यत्वयोग्यता च प्रकृतेर्जडत्वं विषयत्वं च । न चैतयो रस्ति निवृत्तिः । न च करणीयाऽभावा न्निवृत्तिः तज्जातीयस्यान्यस्य करणीय त्वात् । पुनः पुनः शब्दाद्युपभोगवदि त्यत आह ।

दृष्टा मयेत्युपेक्षक एको दृष्टाहमित्यु परमत्यन्या । सति संयोगेपि तयोः प्र योजनं नास्ति सर्गस्य ॥ ६६ ॥

करोतु नाम पौनःपुन्येन शब्दाद्युप भोगं प्रकृतिर्ययाविवेकख्यातिर्न कृतेति कृताविवेकख्यातिस्तु शब्दाद्युपभोगं न जनयति । अविवेकख्यातिनिबन्धनो

सात्त्विकबुद्धिवृत्तिस्वल्यसंपर्कसद्भावे च निवृत्तप्रसवस- सरूपनिवृत्तप्रकृतिदर्शनान्यथानुपपत्त्यार्थापत्तिं प्रमा- णयति । अन्यथेति ॥ ६५ ॥

उत्तरार्यानिरस्याशङ्कामाह । स्यादेतदित्यादिना ।

हि तदुपभोगो निबन्धनाभावेन तद्भवितुमर्हति अङ्कुर इव बीजाभावे । प्राकृतान् हि सुखदुःखमोहात्मनः शब्दादींस्तदविवेकान्ममैतदित्यभिमन्यमान आत्मा भुञ्जीत । एवं विवेकख्यातिमपि प्राकृतीमविवेकादेवात्मा मदर्थयमिति मन्यते । उत्पन्नविवेकख्यातिस्तु तदसंसर्गाच्छब्दादीन्नोपभोक्तुमर्हतीति । नापि विवेकख्यातिं प्राकृतीमपि कर्तुं ततो विविक्त आत्मा स्वार्थमभिमन्तु

अकृतविवेकख्यातिरेव प्रकृतिः शब्दाद्युपभोगं कारयति विहितविवेकख्यातिस्तु शब्दादीन्पुरुषं नीय भोजयितुं पुंसः प्रकृत्यभेदज्ञानमूलत्वात् शब्दाद्युपभोगस्य कारणाभावे कार्याभावादित्यभ्यधायि । ननु विषयिणं कथं शब्दाद्युपभोगस्यासिद्धत्वमित्याशङ्क्य तत्साधयति । प्राकृतान् हीत्यादिना । भवतु प्रकृत्यविवेकज्ञानजन्यो विषयभोगो विवेकख्यातिस्तु प्राकृती न तथेति चेत्तत्राह । एवमिति । ततोनन्तरं किं न स्यादित्यत आह । तत इति । विविक्त इति प्रकृतिसंसर्गाविधुर इत्यर्थः । स्वश्चासावर्थश्चेति स्वार्थस्तं स्वार्थं रूपमित्यर्थः । किं च प्रकृतिसर्गकार्यं स्वर्गापव

मर्हन्ति । पुरुषार्थौ च भोगविवेकौ प्रकृत्यारम्भप्रयोजकाविति अपुरुषार्थौ सन्तौ न प्रकृतिं प्रयोजयतः । तदिदमुक्तं प्रयोजनं नास्ति सर्गस्येति । प्रयुज्यते हि सर्गे प्रकृतिरनेनेति प्रयोजनम् । तदपुरुषार्थत्वे नास्तीत्यर्थः ॥ ६६ ॥

स्यादेतत् । उत्पन्नतत्त्वसाक्षात्कारश्चेत्तदनन्तरमेवमुक्तस्य तस्य देहपातः स्यादिति कथमदेहः प्रकृतिं पश्येत् । अथ तत्त्वज्ञानेपि न मुच्यते कर्मणामप्रक्षीणत्वात् तेषां कुतः प्रक्षयः भोगादिति चेत् हन्त भोः तत्त्वज्ञानं न मोक्षसाधनमिति व्यक्ताव्यक्तज्ञविज्ञानजन्मना तत्त्वज्ञानेनापवर्ग इति रिक्तं वचः । भोगेन चापरिसंख्येयः कर्माशयः

गंपुरुषार्थलक्षणतया पुरुषस्य स्वार्थाभावे विवेकज्ञाने संज्ञाते पुरुषार्थत्वात् प्रकृतिप्रेरकत्वं न स्यादित्यत आह । पुरुषार्थाविति । भोगात्कर्म्मणाम्प्रक्षेपशङ्काकाङ्क्षत्वात्तत्त्वज्ञानान्न मोक्षसाधनमिति दूषणमभ्यधायि ॥ ६६ ॥

प्रचयोऽनियतविपाककालः क्षेतव्यः त
तस्मादपवर्गप्राप्तिरसत्यपि मनोरथमात्र
मित्यत आह ।

सम्यग्ज्ञानाधिगमाद्धर्मादीनामकार
णप्राप्तौ । तिष्ठति संस्कारवशाच्चक्रभ्रमि
वद्धृतशरीरः ॥ ६७ ॥

तत्त्वसाक्षात्कारोदयादेवानादिरप्य
नियतविपाककालोऽपि कर्माशयप्रचयो
दग्धबीजभावतया न जात्युपभोगलक्ष
णाय फलाय कल्पते क्लेशसलिलावसि
क्तायां हि बुद्धिभूमौ कर्मबीजानामङ्कुरं
प्रसुवते । तत्त्वज्ञाननिदाघनिपीतसकल

इदानीं कर्म्मणां ऽपरिमितत्वाद् भोगेन क्षयो न
जायते इत्याह । भोगेनेति । क्रियासामान्यनिराकर-
णान्नैव क्रियाविशेषनिराकरणमप्यसिद्धमित्याह । तथा
चेति । कुतोभवनं कुतो भावः तेन चरतीति कुतो भा-
विकी न कुतोऽपि स्वामितेत्येतत् नास्मीत्यत्र अस्मीति
पदविच्छेदेन क्रियासामान्यनिषेधः कृत आत्मनीत्युक्त-
म् । इदानीं पुरुषवाचकप्रथमैकवचनान्तनृशब्दपरत्वेन
व्याचष्टे । अथवेति । नास्मीति पदविच्छेदेन संहिता-
सास्यादितिभावः । संस्कारशब्देन प्रारब्धकार्ययोग्र-

कृष्टसलिलायामूषरायां कुतः कर्म्मबी जानामङ्कुरप्रसवः तदिदमुक्तम् । ध र्म्मादीनामकारणप्राप्ताविति । अकारण त्वप्राप्तावित्यर्थः । उत्पन्नतत्त्वज्ञानोऽपि च संस्कारवशात्तिष्ठति । यथोपरतेऽपि कुलालव्यापारे चक्रं वेगाख्यसंस्कारव शाद्भ्रमंस्तिष्ठति । कालपरिपाकवशात्तू परते संस्कारे निष्क्रियं भवति । शरी रस्थितौ च प्रारब्धपरिपाकौ धर्माध र्म्मौ संस्कारः । तथा चानुश्रूयते । भो गेन त्वितरे क्षपयित्वाथ संपद्यत इति तस्य तावदेव चिरं यावन्न विमोक्ष्ये । अथ संपत्स्यत इति । प्रक्षीयमाणाऽवि द्यासंस्कारविशेषश्च संस्कारस्तद्वशात्त त्सामर्थ्याद्धृतशरीरस्तिष्ठति ॥ ६७ ॥

हयम् । अत्र वेदान्तिसंमतिमाह । तथा चानुश्रूय- ते इति । आरब्धफले पुण्यपापे इत्यर्थः । आरब्धभा- गे श्रुतिं प्रमाणयति । तावदेवेति । अस्य तावद्विल- म्बो यावत् न विमोक्ष इति । न विमोक्ष्यते इति । अस्माच्छरीरादथ संपत्स्यत इत्यर्थः । न केवलं प्रा-

स्यादेतत् । यदि संस्कारशेषादपि धृतशरीरस्तथापि कदास्य मोक्षो भवि ष्यतीत्यत आह ।

प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधा नविनिवृत्तौ । ऐकान्तिकमात्यन्तिकमु भयं कैवल्यमाप्नोति ॥ ६८ ॥

अनारब्धविपाकानां तावत्कर्माश यानां तत्त्वज्ञानाग्निना बीजभावो द ग्धः प्रारब्धविपाकानां तूपभोगेन क्षये सति प्राप्ते शरीरभेदे विनाशे चरितार्थ त्वात्कृतप्रयोजनत्वात् प्रधानस्य तं पु रुषं प्रति विनिवृत्तौ ऐकान्तिमवश्यं भावि आत्यन्तिकमविनाशीत्युभयं कैव ल्यं दुःखत्रयविगमं प्राप्नोति पुरुषः ६८

प्रमाणेनोपपादितेप्यत्यन्तश्रद्धोत्पा दनाय परमर्षिपूर्वकत्वमाह ।

रब्धकार्यं पुण्यपापयोर्ग्रहणं । दह्यमाना विद्या सं- स्कारविशेषः संस्कारसर्गेण परिगृह्यते इत्याह । प्रती- यमानेति ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥

पुरुषार्थज्ञानमिदं गुह्यं परमर्षिणा समाख्यातं । स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम् ॥ ६९ ॥

गुह्यं गुहानिवासि स्थूलधियां दुर्बोधमिति यावत् । परमर्षिणा कपिलेन । तामेव श्रद्धामागमिकत्वेन द्रढयति । स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानां । यत्र ज्ञाने यदर्थं यथा चर्मणि द्वीपिनं हन्तीतिवत् । भूतानां प्राणिनां स्थित्युत्पत्तिप्रलया आगमैश्चिन्त्यन्ते ६९

स्यादेतत् । यत्परमर्षिणा साक्षात्कथितं तच्छ्रद्दधीमहि । यत्पुनरीश्वरकृष्णेन कथितं तत्र कुतः श्रद्धेत्यत आह ।

एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ । आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम् ॥ ७० ॥

एतत्पवित्रं पावनं दुःखत्रयहेतोः पाप्मनः पुनातीति अग्र्यं सर्वेभ्यः पवित्रेभ्यो मुख्यं मुनिः कपिलः आसुरयेऽनु

करुणया प्रददौ आसुरिरपि पञ्चशिखा-
य तेन च बहुधाकृतं तन्त्रं ॥ ७० ॥

शिष्यपरम्परयागतमीश्वरकृष्णेन चै-
तदार्य्याभिः। सङ्क्षिप्तमार्यमतिना स-
म्यग्विज्ञाय सिद्धान्तम् ॥ ७१ ॥

आराद्यातास्तत्त्वेभ्य इत्यार्य्या इति।
आर्य्या मतिर्यस्य सोयमार्यमतिरिति ७१

एतच्च शास्त्रं सकलशास्त्रार्थसूचक-
त्वात् न तु प्रकरणमित्यत आह।

सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्न-
स्य षष्टितन्त्रस्य। आख्यायिकाविरहि-
ताः परवादविवर्ज्जिताश्चापि ॥ ७२ ॥

तथा च राजवार्तिकम्। प्रधाना-
स्तित्वमेकत्वमर्थवत्त्वमथान्यता। पा-
रार्थ्यं च तथानैक्यं वियोगो योग एवच।

आरात् दूरात् ॥ ७१ ॥

प्रधानास्तित्वमित्यादि। अयमर्थः। असदकरणा-
दित्यनेन प्रकृत्यर्थं कार्यस्य सत्वं प्रसाध्येदानीं प-
रिणामादित्यादिभिः पञ्चभिर्हेतुभिः प्रधानास्तित्वं
कथितम्। विपरीतमव्यक्तमित्यनेन एकत्वं प्रधा-

शेषवृत्तिरकर्तृत्वं मौलिकार्थास्स्मृता दश । विपर्ययः पञ्चविधस्तथोक्ता नव तुष्टयः । करणानामसामर्थ्यमष्टाविं

नस्य प्रदीपवच्चार्थतोवृत्तिः । पुरुषार्थ एव हेतुर्न केन चित्कार्यते करणं पुरुषार्थहेतुकमिदं प्रतिपुरुषविमोक्षमित्यादि प्रवेशेष्वर्थवत्त्वं प्रधानतत्कार्ययोः परिणामतः सलिलवदित्यन्यत्वं प्रधानस्य सङ्घातं परार्थत्वादित्यनेन पारार्थ्यं प्रधानतत्कार्ययोर्हेतुमदनित्यमव्यापि सक्रियमनेकमित्यनेन महदादेरनैक्यं जननमरणं करणानां प्रतिनियमादित्यनेन पुरुषनानैक्यं सैव च विशिनष्टि पुनरित्यनेन । तत्कार्यप्रधानवियोगः पुरुषस्य तस्मात्तत्संयोगादित्यनेन महदादिलिङ्गेन पङ्ग्वन्धवत् उभयोरपि संयोग इत्यनेन प्रधानेन योगः पुरुषस्य अन्योन्याश्रयेत्यनेन समुदायादित्यनेन च गुणानां विशेषवृत्तेरङ्गाङ्गित्ववृत्तिः अकर्तृभावश्चेत्यनाकर्तृत्वं पुरुषस्य विपर्यया शक्तितुष्टिसिध्याख्या इत्यारभ्य विपर्ययादयः पदार्थाः षष्टिपदार्थाः कथिताः स्मृता इति । प्रकृतिर्महानहङ्कारश्च शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसगन्धतन्मात्रं षोडशको गणो विकारः पुरुषः प्रकृतेर्महानित्यनेन दर्शितो विपर्ययः पञ्चविधः अविद्यास्मितारागद्वेषाभिनिवेशाः तमोमोहमहामोहतामिस्रान्धतामिस्राः पराभिधाना उक्ता इतिशेषः । पञ्चविपर्ययभेदा इत्यनेनोद्दिष्टाः भे-

शतिधा मतं । इति षष्टिः पदार्थाना मष्टभिः सह सिद्धिभिरिति । सेयं षष्टि पदार्थी कथितेति सकलशास्त्रार्थकथना त्नेदं प्रकरणमपि तु शास्त्रमेवेदमि ति सिद्धं । एकत्वमर्थवत्त्वं पारार्थ्यं च प्रधानमधिकृत्योक्तं । अन्यत्वमकर्तृक त्वं बहुत्वं चेति पुरुषमधिकृत्य । अस्ति त्व वियोगो योगश्चेत्युभयमधिकृत्य । वृत्तिस्थितिरिति स्थूलसूक्ष्ममधिकृत्य ७२

मनांसि कुमुदानीव बोधयन्ती सतां सदा । श्रीवाचस्पतिमिश्राणां कृतिरस्ता तत्त्वकौमुदी ॥ इति वाचस्पतिमिश्र विरचिता तत्त्वकौमुदीसमाप्ता ॥

दास्तमसाष्टविध इत्यनेन विशेष उक्तः । तथोक्ता नव तुष्टय इति । प्रकृत्याख्या उपादानाख्या कालाख्या भा-ग्याख्याश्चतस्रोम्भः सलिलं ओघमहौघापरनामिका आध्यात्मिका अपराः पञ्चबाह्याः पारं सुपारं पारपा-रं अनुत्तमाम्भ उत्तमाम्भ इति । नव च तुष्टयः आध्या-त्मिका इत्यनेन प्रदर्शिताः । करणानामसामर्थ्यमिति । बाधिर्यं १ कुष्टिता२अन्धत्वं ३ जडता ४ अघ्रिता ५ मूकता ६ कौण्यं ७ पङ्गुत्वं ८ क्लैब्य ९

ऽनावर्तत्वं १० मनता ११ इत्ये प्रकृत्याख्या वैकल्यं १२ उपदर्शनाख्या वैकल्यं १३ भाग्याख्या वैकल्यं १४ पारवैकल्यं १५ सुपारवैकल्यं १६ अनुत्तमाम्भवैकल्यं १७ उत्तमाम्भवैकल्यं १८ भाववैकल्यं १९ स्वभाववैकल्यं २० भावाभाववैकल्यं २१ विवेकवैकल्यं २२ शुद्धिवैकल्यं २३ प्रमोदवैकल्यं २४ प्रमुदितवैकल्यं २५ मोदमानवैकल्यं २६ एकादशेन्द्रियवधाख्यां साकं गृहीतमिति षष्टिः पदार्थाः षष्टिभिः सह सिद्धिभिरिति अध्ययनभावनाभावं आध्यात्मिकं दुःखविघातो मोदमान इति अभिन्नार्थकः आधिभौतिको दुःखविघातो मुदित इति नामान्तरं आधिभौतिकदुःखविघातो मोदमानसंज्ञान्तरमित्यष्टौ सिद्धयः आभिः सह पूर्वोक्तायाः षष्टेः समाहारः षष्टिपदार्थाः भोजराजवार्तिकप्रतिपादिता इति । क्व च वाचस्पतेः सूक्तिः क्व च मन्दस्य मे मतिः । क्व चापि संमतं तत्त्वमिति शोध्यं मनीषिभिः ॥ ७२ ॥

इतिश्रीबोधारण्ययतिशिष्यश्रीभारतीनामकयतिकृता तत्त्वकौमुदीव्याख्या समाप्ता । संवत् १९४५ ॥



## इश्तिहार ।

इश्तिहार दिया जाता है ग्राहक लोगोंको कि हमारे इहां बम्बई, कलकत्ता, लखनऊ, आगरा, दिल्ली, मेरट, इलाहाबाद, पूना, बनारस, और कई एक छापे की पुस्तक महजूद है जिन महाशयों को लेना होय तो आधआने का टिकट भेजके संस्कृत और भाषा सूचीपत्र मंगाय एवें उसमें सब पुस्तकों का नाम और दर लिखा है इस कार्य के संपादक,

वाबू कौलेश्वरसिंह
बुकसेलर,
बनारस ।



